मम ॥ भगेन त्वा संसृजामि मासरेण सुरामिवेत्यथैनां वाचयतीमाल्लाजानावपामि समृद्धिकरणान्मम[1] । तुभ्यं च संवननांस्तदग्निरनुमन्यतामियं[2] स्वाहेत्येवमेव त्रिरास्थापयति त्रिः परिणयति त्रिरावपत्यथैनां[3] प्राचीं वोदीचीं वा ॥ १६ ॥

सप्त पदानि प्रक्रमयत्येकमिषे विष्णुस्त्वान्वेतु द्वे ऊर्जे विष्णुस्त्वान्वेतु त्रीणि व्रताय विष्णुस्त्वान्वेतु चत्वारि मायोभवाय विष्णुस्त्वान्वेतु पञ्च पशुभ्यो विष्णुस्त्वान्वेतु षड्रायस्पोषाय विष्णुस्त्वान्वेतु सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेत्विति । सप्तमे पदे समीक्षमाणो जपति सखा[4] सप्तपदा[4] भव[4] सखायौ सप्तपदावभूव[5] । सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठा इत्यथास्या[6] दक्षिणमंसं प्रति धाङ्गमन्ववहृत्य हृदयदेशमभिमृशति मम हृदये हृदयं ते अस्तु मम चित्ते चित्तमस्तु ते । मम वाचमेकमना शृणु ममेवानुव्रता भव सहचर्या मया भवेत्यथास्या दक्षिणं कर्णमाजपति मां ते चित्तं प्रविशतु मां चक्षुर्मामु ते मनः । मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते ॥

---

1) Thus N, Pr *°karanāmama* G *°kāranammama* 2) Thus G Pr, N संवनना सद्° 3) N त्रिरयास्य° 4) Thus G Bh N Pr om
5) Thus N, G *sakhyā saptapadā babhūva* Pr *sakhāyau saptapadā babhūva*
6) G om *atha*

मधु हे[1] मध्वागाहे जिह्वा मे मधुवादिनी । मुखे मे सारघं मधु दत्सु संवननं कृतम् ॥ चाक्रवाकं[2] संवननं यन्नदीभ्य उदाहृतम् । यद्देवगन्धर्वौ[3] वित्तस्तेन[3] संवनिनौ स्वः[4] । मां चैव पश्य सूर्यं च मान्येषु मनः[5]
5 कृथा इति' ॥ १७ ॥

अथास्याः स्वधितिं मूर्ध्नि धारयन्हिरण्यं वोदकुम्भेनावसिञ्चत्यापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेनावसिच्य[6] यथार्थं वहत्युह्यमानामनुमन्त्र-
10 यते[7] ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनामनु[8] । पुनस्तान्यज्ञिया देवा नयन्तु यत आगता इत्यथैनां गृहानुह्यानडुहे रोहिते चर्मण्युपवेशयतीह गावो निषीदन्त्विहाश्वा इह पुरुषाः । इहो सहस्रदक्षिणोऽभि पूषा निषीदत्वित्यथैनामाग्नेयेन स्थालीपाकेन याजयत्यथैतस्य
15 स्थालीपाकस्योपहत्याभिघार्य जुहोत्यग्नये स्वाहाग्नयेऽग्नि-

---

1) Thus N, G *ge* 2) N चऋवाय, G *cākrava am* 3) Thus G N, Bh *°gandharvā* See HG I 24 6, Baudh G I 6 *yadvittau devagandharvau* 4) Thus G Pr, N स्वके· See HG I 24 6 5) Thus Pr, G *manamakrchā*, N मन कृथा 6) G om *nuvakenā* 7) Thus N, G *°upyamanam°*, Bh Pr *°ūhyamānām°* 8) N जनासामन, G *vaśumanu* See RV X 85 31, Āp MB I 6 9

वते स्वाहाग्नये ऽन्नादाय स्वाहाग्नये स्विष्टकृते स्वाहेति[1] ' यावज्जीवमेतमग्निं व्रीहिभिर्यवैर्वा सायं प्रातः परिचरत्यग्नये स्वाहेति सायं पूर्वामाहुतिं जुहोति ' प्रजापतये स्वाहेत्युत्तरां ' सौरी पूर्वा प्रातरेके समामनन्त्यौपासनो[2] नित्यो धार्यो ' ऽनुगतो मन्थ्यः श्रोत्रियागाराद्वाहार्यो ' 5 ऽन्यतरस्य चैतदहरुपवासः[3] ' ॥ १८ ॥

अष्टम्यः[4] पर्वाणि[5] चोपवसत्याग्नेयेन[6] स्थालीपाकेन पर्वसु यजते ' वाग्यत आस्त[7] आ[7] नक्षत्राणामुदयादुदितेषु नक्षत्रेषु वत्समन्वारभ्योत्थापयत्युदायुषा स्वायुषेत्यथैनां ध्रुवमरुन्धतीमन्यानि च नक्षत्राण्यभिवीक्षयति 10 नमो ब्रह्मणे ध्रुवायाच्युतायास्त्वित्येतेनानुवाकेन[8] ' ध्रुवमुपतिष्ठते ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवत[9] स्थितम् । त्वं नक्षत्राणां मेथ्यसि[10] स मा पाहि पृतन्यत इति ' सप्तर्षयः प्रथमां कृत्तिकानामरुन्धतीं ध्रुवतां ये ह निन्युः[11] । षट्कृत्तिका मुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्ट- 15

---

1) Between *svāheti* and *yāvaj°* G ins. *ey āhṛtā hirṇuhu* 2) Thus N, G *°aupāsane* 3) Thus N G *ca tad°* 4) Thus G Bh N अष्टम्य 5) Thus G N Bh *parvaṇi*. Baudh. G II 12 *parvaṇi cāg-nyādhānīyaḥ* 6) Between *°vasaty* and *āgneyena* G ins *athainām*. See Hir I 23, 7 7) Thus N Bh G *āst* 8) Thus N Bh Pr G *dhānaeny°* 9) Thus MSS 10) Thus N G *meddhya* Pr *medhyan* 11) Thus N, G *nanyuḥ*

मीत्यरुन्धतीं 'त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्र-
ह्मचारिणौ भवतो 'ऽथ चतुर्थ्यामपररात्रे[1] ऽन्तरागारे
ऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आ-
हुतीर्जुहोत्यग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्रा-
5 ह्मणस्त्वा नाथकामः प्रपद्ये । यास्यां पतिघ्नी तनूः प्रजाघ्नी
पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा ॥
वायो प्रायश्चित्त आदित्य प्रायश्चित्ते प्रजापते प्रायश्चित्ते त्वं
देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये ।
यास्यै निन्दिता[2] तनूस्तामितो नाशयामसि स्वाहे-
10 ति' ॥ १९ ॥

अथैनां तूष्णीं हिंकृत्य वाग्यत उपेत्यामूहमस्मि सा
त्वं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेहि संभवाव सह
रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय
सुवीर्यायेत्यथास्या अपवृत्तार्थो ऽपवृत्तार्थाये[3] मुखेन मुखं
15 संनिधाय प्राणित्येतं[4] प्राणमपानिहीति 'तं सा प्रत्यपा-
नित्यथास्या आचान्तोदकाये[5] पाणी प्रक्षाल्याभिमृशति
करद्धयच्छ्विन त्वा पञ्चशाखेन हस्तेनाविद्धिपावता सा-

---

1) Thus N, G *caturtthām°*, Pr *°pararātrau*, Bh *apararātre*
2) Thus N Bh Pr; G *nimnditā*
3) G *pravṛttārthāyām*, N प्रवृतार्थाये; Bh *apavṛttārthāyā*
4) G *prāṇpatyai°*, N प्रपित्ये°
5) Thus G N, Bh *°odakāyāḥ*

हस्रेण[1] यशस्विनाभिमृशामि सुप्रजास्त्वायेति भसद्देशं '
यदा मलवद्वासा स्याद्थैनां ब्राह्मणप्रतिषिद्धानि व्रतानि
संशास्ति यां मलवद्वाससमिति ' चतुर्थ्यां[2] स्नातां प्रयत-
वस्त्रां ब्राह्मणसंभाषां[3] सं ते मनसा मन इत्येतेनानुवा-
केनोपसंविशति ' सर्वाण्युपायनानि मन्त्रवन्ति भवन्तीत्या- 5
श्मरथ्यो ' यथादौ यथर्तावित्यालेखनः ' ॥ २० ॥

अथास्याः प्रथमगर्भिण्याश्चतुर्थे मासि सीमन्तं कुर्वन्त्या-
पूर्यमाणपक्षे पुष्ये नक्षत्रे पयसि स्थालीपाकं श्रपयित्वा-
न्तरागारे ऽग्निमुपसमाधाय ज्याभ्यातानाद्रभृत इति
हुत्वैता आहुतीर्जुहोति भूर्भुवः सुवः प्रजापत[4] इति[4] 10
चतस्रश्येण्या शलल्या त्रीणि[5] दर्भपुञ्जीलानि[5] शला-
लुग्रप्समित्युपनियम्योर्ध्वं[6] सीमन्तमुन्नयति भूर्भुवः सुवो
राकामहं यास्ते राके ॥ सोम एव नो राजेत्याहुर्ब्रा-
ह्मणीः[7] प्रजाः । विवृत्तचक्रा आसीनास्तीरेण यमुने
तवेति तीरेणासौ तवेति वा यस्यास्तीरे वसति ' पुर- 15
स्तादग्रेरेतानि निधाय व्रीनोदनानुद्धृत्य सर्पिषोपसिच्यो-
पनिदध्यात्युदशरावं चतुर्थं ' तेषामेकैकमवेक्षमाणां[8] पृच्छति

---

1) Thus Pr, G N *sahasrena*
2) Thus N G *caturthīm*
3) Thus G, N [illegible]°
4) Thus N Ph G *prajāpatim*
5) Thus G, N त्रिर्दर्भपुञ्जीलै
6) Thus G Bh N °[illegible]°
7) G N om. the visarga
8) Thus Bh Pr G °*mānā*, N °माणां

किं पश्यसीति ' पुत्रांश्च पशूंश्चेति प्रत्याह[1] ' तेषामेकं
ब्राह्मणान्भोजयेदेकं[2] ब्राह्मणीरेकं[3] सह कुमारैः सा
प्राश्नाति ' वाग्यत आस्त आ नक्षत्राणामुदयाद्दितिषु
नक्षत्रेष्विति समानम् ' ॥ २१ ॥

5 अथ पुंसवनं तृतीये मासि चतुर्थादौ वा तिष्येण वा
हस्तेन वानुराधैर्वोत्तरैर्वा प्रोष्ठपदैर्न्यग्रोधावरोधमाहृत्या-
नवस्नातया कुमार्या दृषत्पुत्रे[4] दृषत्पुत्रेण[4] पेषयित्वा-
न्तरागारे ऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत इति
हुत्वा[5] आहुतीर्जुहोति[5] यस्त्वा हृदा किरिणेति चतस्रो '
10 ऽपरेणाग्निं प्राचीमुत्तानां[6] निपात्याथास्या दक्षिणे ना-
सिकाछिद्रे ऽङ्गुष्ठेनानुनयति पुंसवनमस्यमुष्या इति ' सा
ह्येत्याह ' पुमांसमेव जनयत्यथ क्षिप्रंसुवनं ' यज्ञोपवीतं
कृत्वाप आचम्यानाप्रीतेन शरावेणानुस्रोतसमुदकमाहृत्य
पत्तस्तूर्यन्ती निधाय मूर्धञ्जोष्यन्तीमभिमृशति[7] ' दशभि-
15 स्त्वाङ्गुलिभिरभिमृशामि[8] दशमास्याय सूतवा[9] इत्यथैना-
मद्भिरवोक्षति यथैव वातः पवते यथा समुद्र एजति ।

---

1) Thus N, G pratyīyīma 2) Thus G N Bh, Pr brāhmaṇam° 3) Thus G Bh, N ब्राह्मणीं चेक, Pr brāhmaṇīm ekam 4) Thus Pr, G Bh dṛṣatpu° N दृषत्पु° 5) G huta° hutvāhutīr° 6) Thus N Bh, G prācīnām° 7) Thus N Bh, Pr koṣyantīm, G °joṣyantīm° See Āp G 14 14 8) G Bh daśabhiḥsvāṅgulibhir° N Pr daśabhiḥsvāṅgulibhir° 9) Thus N, G Pr sūtava

एवं कुमार एजतु सह जरायुणावपद्यतामित्यंय यद्यपरा[1] न[1] पतेत्पाणिनोदकमादाय[1] मूर्धन्येनामवसिञ्चेत्तिलदे ज्वपद्यस्व न मांसमसि नो दलमवपद्यस्वासाविति[2]' यदि[3] गर्भः स्रंसेदार्द्रेण पाणिना त्रिरूर्ध्वं नाभिरुन्मृज्येत्पराञ्चं[4] त्वा नार्वाञ्चं[5] त्वष्टा बध्नातु बन्धनैः । स ऋतूनुपशेष्व[6] दशमासो ज्वीरस्वेति' ॥ २२ ॥

विजातायाः[7] परिदां करोति' दक्षिणार्धे ज्गारस्याग्निमुपसमाधाय सर्षपान्फलीकरणमिश्रानञ्जलावध्युप्य जुहोति शण्डो[8] मर्क उपवीरस्तुण्डिकेर उलूखलः । च्यवनो नश्यतादितः स्वाहेत्येवं द्वितीयमेवं तृतीयमंथापरां केशिनी[9] श्वलोमिनी खजात्रोजोपकाशिनी[10] । अपेत नश्यतादितः स्वाहेत्येवं द्वितीयमेवं तृतीयमंथापरामर्यम्णः[9] कुम्भीपात्रः[11] पात्रपाणिर्निपुणिः[12] । अपेत[13] नश्यतादितः स्वाहेत्येवं[14] द्वितीयमेवं तृती-

1) Thus Bh, G *yadjapamānatat°*, N °पातेता° 2 Thus MSS, read perhaps with Baudh G VII 2 *avapadjasva mastyā iti* 3) G om 4) Thus Bh Pr, G N *parā ica* 5) G *nirvāñca*, N नर्वाच, Bh Pr *nirvāñcam* 6) Thus Pr, G °*upaviçetva*, N °पुशे-- 7) Thus N Bh, G *ni°* 8) See HG II 3 7 PG I 16 23, Ap. MB II 13 8 9) G om from *keçinī* unto *aryamnah* 10) N खजात्रोजाप°, Pr *khajātrolopa°* 11) Thus G Bh Pr N कुम्भी तद्गी पात्र 12) Thus N Pr, G *pāṇinipuṇiḥ* 13) Thus G Pr N पेत 14) G om from *ityevaṃ* unto *muraralasah*

यामंचापरां[1] मिश्रवाससः कौबेरका रक्षोराजेन प्रेषिताः ।
ग्रामं सजानयो[2] गच्छन्तीच्छन्तो ऽपरिदाकृतान्स्वाहा ॥
एतान्घ्नतैतान्गृह्णीतेत्ययं[3] ब्राह्मणो दूतः । तानग्निः पर्य-
सरत्तानिन्द्रस्तान्बृहस्पतिः । तानहं[4] वेद ब्राह्मणः
5 प्रमृशतः कूटदन्तान्विकेशान्लम्बनस्तनान्स्वाहा[5] ॥ नक्तं-
चारिण[6] उरस्पेशाञ्छूलहस्तान्कपालपान्[7] । पूर्व[8]
एषां पितेत्युच्चैः[9] श्राव्यकर्णकः । माता जघन्या सर्पति
ग्रामे विधुरमिच्छन्ती[10] स्वाहा ॥ प्रदोषचारिणी[11] स्वसा
संधिना प्रेक्षते कुलम् । या स्वपन्तं बोधयति यस्यै
10 विजातायां मनः[12] । तासां त्वं कृष्णवर्त्मने क्लोमानं
हृदयं यकृत् । अग्ने अक्षीणि निर्दह स्वाहेत्येवमेव नि-
ष्क्रामति च प्रपद्यमाने चावपताद्धरहरा निर्दशताया[13]
इति' ॥ २३ ॥

सा[14] यदि पुमांसं जनयति तमभिमृशति वृधदिति[15]'
15 मध्यमं पलाशपलाशं संवेष्ट्य तेनास्य दक्षिणं कर्णमाजपति

---

1) G om from *ityetam* unto *miśravāsasaḥ* 2) Thus G, N सजातयो
3) Thus N Pr, G °*ghnatayitān*° 4) Thus N, G °*aha* 5) G °*vikeśallambana*°, N °विशेशालम्बा°
6) Thus N Bh, G *naktan*°
7) Thus N, G °*ñchūlya*° 8) Thus N, G *parva* 9) Thus G, N पितेत्यु°
10) Thus G, N विधुरनि° 11) Thus G Bh, N °धारिणी
12) Thus N, G *enaḥ* 13) Thus G Bh, N निर्दिश°; Pr *nirdaśa*°
14) Thus N Pr, G *vasā* 15) Thus Pr, G *vṛthad*°, N वृध्यदि°

भूस्त्वयि दधामीति ' भुवस्त्वयि दधामीत्युत्तरं ' सुवस्त्वयि
दधामीति दक्षिणमपि वोत्तरमेव द्विः सकृदेव दक्षिणम-
थैनमभिमन्त्रयते ऽश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।
वेदो वै पुत्रनामासि स जीव शरदः शतम् ॥ मेधां ते
देवः सविता मेधां देवी सरस्वती । मेधां ते अश्विना- 5
वुभावाधत्तां पुष्करस्रजौ । वेदो वै पुत्रनामासि स जीव
शरदः शतमित्यथैनं दधि मधु घृतमिति संसृज्य त्रिभिर्द-
र्भपुञ्जीलैर्हिरण्येन वा त्रिः प्राशयत्यपां[1] त्वौषधीनां रसं
प्राशयाम्यायुर्वर्चो यशो मेधां त्वयि दधामि सवित्रा प्रसू-
तस्त्वष्टा वीरमधात्स मे शतायुरेधि[2] भूर्भुवः सुवरि- 10
त्यथास्य दक्षिणेन हस्तेन दक्षिणं हस्तमभीवाङ्गुष्ठमभीव
लोमानि गृह्णात्यग्निरायुष्मानित्येतैर्मन्त्रैर्नवनीतेन पाणी
अभ्यज्य[3] हिरण्यं हस्ते कृत्वा ॥ २४ ॥

अग्नौ प्रताप्याभिमृशत्यग्नेस्त्वा[4] तेजसा सूर्यस्य[5] वर्च-
सेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाभिमृशामि ॥ 15
अङ्गादङ्गात्संभवसि हृदयादधि जायसे[6] । आत्मा वै पुत्रना-

---

1) Thus Pr, G N *praśayanty°*
2) Thus N Pr, G *°edhi*
3) Thus Pr, G *abhyarcya* N अभिमृश्य
4) Thus Pr, G *°agnestvā*, N °ग्नेत्वा
5) Thus N Pr, G *sūryya*
6) Thus N, G *athojāyatye*

मासि स जीव शरदः शतमित्यथैनं[1] वात्सप्रेणाभिमृशति
दिवस्परीत्यनुवाकेन ' यत्र शेते तदभिमृशति वेद ते भूमि
हृदयं दिवि चन्द्रमसि श्रितम् । वेदामृतस्य[2] गोप्तारं°
माहं[2] पौत्रमघं रुदमित्यथैनं मातुरुपस्थ आदधाति मा
5 ते पुत्रं[3] रक्षो वधीन्मा[4] धेनुरत्यासारिणी । प्रिया धनस्य
भूया एधमाना[5] स्वे वश इति ' स्तनं प्रतिधापयत्ययं
कुमारो जरां धयतु दीर्घमायुः । तस्मै त्वं स्तन[6] प्रप्या-
यायुर्वर्चो[6] यशो बलमिति ' संविष्टाभ्यां परिदां करोति
नामयति न रुदति यत्र वयं वदामसि यत्र चाभिमृशा-
10 मसीति ' शिरस्त उदकुम्भं निदधात्यापः सुप्तेषु जाग्रत
रक्षांसि निरितो[7] नुदध्वमिति ' नैतासामपामुदकार्यं
कुर्वन्त्यथ यदि चिरं[8] न विज्ञायते[9] स्तनमेनां दर्शयेत्य-
रिमुक्तायां क्षिप्रमेवोपनिर्हरेद्यदा[10] यदा सूतिकारोगः[11]

---

1) After °मिय N ins. मेधां --- धिद्यमन्तर्धायात्र --- मेधां ते देव, सविता मेधा देवी सरस्वती मेधां ते अश्विना उभावाधत्तां पुष्करस्रजौ । वेदो वै पुत्रनामासि स जीव शरदः शतमिय

2) G *vadāhasya gopāmaham*, N वेदामृतस्य गोप्तारं, Pr *vedāmṛtasya gopāham* See SMB I 5 11 *vedāmṛtasyāham nāma*

3) Thus N Pr, G *pumam* 4) Thus Pr, G *ravan°*, N दिशी°

5) Thus N, G *ye°* 6) Thus G, N स्तन प्रप्यायस्व°; see Āp. MB II 13 2 HG II 4 3 7) G *nirrlo*, N निरिद्रा 8) G *cinan*, N --

9) Thus G N विज्ञायेत 10) Thus N Bh, G *kṣipramevopanirhared yad°*

11) G *sūtikārogasyadadakṛ°*, N सूतिकारोगस्य इति°, Bh *sūtikāroge syāt*; Pr *sūtikāroga syāt*

स्याद्विणास्य[1] पदस्तासोदकेन पाणिं क्लेदयित्वा तदा त
तं[2] देशमवमार्ष्टि यत्रास्या दुःखं भवति धनुर्मटची
पुरुषस्य हस्तयोरिकशतं[4] शृणारङ्ग[5] ते धापयितारस्त्वं
रोगस्येशिषे त्वमु रोगस्य[7] सूतिकारोगभिपद्यमस्यमुष्या
इति ' ॥ २५ ॥

~ उपनिर्हरन्ति सूतिकाग्निमौपासनमतिहरन्ति ' स ए
उत्तपनार्थो भवति ' नास्मिन्किंचन कर्म क्रियते ' दशम्य
स्नातौ मातापुत्रौ ' शुच्यगारं कुर्वन्त्युपनिर्हरन्त्यौपास
सूतिकाग्निमतिहरन्त्यन्तरागारे[9] अग्निमुपसमाधाय जयाभ्या
तानाभ्राद्भृत इति हुत्वेता आहुतीर्जुहोति धाता ददा
नो रयिमित्यष्टौ ' दशम्यां पुत्रस्य नाम दधाति द्व्यक्षरं[10]
चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्टानान्तं ' तदि
प्रतिष्ठितमिति विज्ञायते ' पिता मातेत्यग्रे[11] अभिव्याहरे
याताम्[12] ' विज्ञायते मम नाम प्रथमं जातवेदः पिता मात
च दधतुर्यदग्र इति ' द्वे[13] नामनी[13] कुर्याद्विज्ञायते न

---

1) *Zie* noot 11, pag 26  2) From *tam* unto *yatrāsyā* G ver corrupt.  3) G *madajī*, N corr, Bh *manthajī*, Pr *mādacī*  4) Thu N Pr, G °*claram*  5) Thus Pr, G *grenor'*, N corr  6) Thus Pr, G [illegible]  7) Thus N Pr, G [illegible]  8) Thus G Bh, Pr [illegible]
9) G *autakāgnim*°, N सूतकाग्नि°; Bh *sūtāgnim*°  10) Thus N, G *dvakṣaram*  11) Thus N, G *pitā mātyagre*, Bh *pitā mātā agre*
12) Thus Bh, G *bhivyāharetām*, N भिव्याहरेयातां  13) Thus N Bh, G *venāma*

तस्माद्द्विनामा ब्राह्मणो ऽर्धुक इति 'नक्षत्रनाम द्वितीयं स्यादन्यतरद्गुह्यं [1] स्यादन्यतरेणैनमामन्त्रयेरन् [2] ' ॥ २६ ॥

विप्रोष्य हरिणी दूर्वे आदाय गृहानुपोदेति गृहा मा बिभीत मा वेपिढ्मूर्ज बिभ्रत एमसि । ऊर्ज बिभ्रद्वः [3] सुमनाः सुवर्चा [4] गृहानेमि मनसा मोदमानः ॥ येषां [5] प्रवसन्नध्येति [6] येषु सौमनसो [7] बहुः [8] । गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥ इमे गृहाः प्रति जीविष्यस्युर्ज्र्ज बिभ्रतो जगतः सुशेवाः । एह [9] वत्सः [10] क्रन्दवा [11] कुमार आ धेनवो बहुला नित्यवत्साः ॥ उपहूतं गोऽश्वमुपहूता अजावयः [12] । अथो अन्नस्य कीलाल उपहूतो गृहेषु मे ॥ ऊर्ज बिभ्रत एमस्यूर्जा वः संसृजामि रमध्वं मा बिभीतनेति [13] ' तृणे प्रास्यति ' शिवा उपमितः प्रमितश्च सन्त्विति [14] द्वार्ये संमृशति ' क्षेमाय वः शिवः शान्त्यै प्रपद्य इति प्रपद्यते [15] दक्षिणपूर्वा-

---

1) Thus Bh, G om *anyataradguhyam*, N अन्यतर् गुह्य . 2) Thus N, G *°amantrayıt*, Bh *°āmantrayiran* 3) G om the visarga 4) G *suvarccah* | , N सुमेधा 5) Thus N, G *eṣīm* 6) G *pavasannarddhyemi*, N प्रसन्नध्येति 7) Thus N, G *saumanasaumanasau* 8) G *babhuh*, N बहु 9) G Bh Pr *ehi*, N इति 10) Thus N Pr, G Bh om the visarga 11) Thus G, N क्र दवा, Pr *kandatiā* 12) Thus N Pr, G *ajavayah* 13) G *babhitetı*, Pr *bhītanetı*; N corr , see AV VII 60 1, Kauś. 89 12. 14) Thus N Bh Pr, G *santiti* 15) Thus N, G om

भ्यामनुवीक्षते[1] ऽभयं वो[2] ऽस्त्वभयं[2] मे अस्त्विति' भार्यां संगच्छमानामनुमन्त्रयते विश्वा उत त्वया वयमित्येतया 'पुत्रं संगच्छमानमनुमन्त्रयते ऽङ्गादङ्गात्संभवसीति द्वाभ्यामथैनं मूर्धन्त्रिरवजिघ्रत्यशूनां त्वा हिंकारेणाभिजिघ्रामि प्रजापतये[3] त्वा[3] हिंकारेणाभिजिघ्रामि[3] प्रजापतिस्त आयुर्दधातु स मे शतायुरेधि भूर्भुवः सुवरिति' सर्वेभ्यः प्राणेभ्यो जातासि सा जीव शरदः शतमिति उक्षितुरथैनं पठे मास्वनं प्राणयति 'तस्य स एव प्राशनकल्पो यो[4] मेधाजनन[4] एतावन्नाना[4] भूरित्यग्रे प्राणयति भुव इति द्वितीयं सुवरिति तृतीयम्' ॥ २७ ॥

अथास्य सांवत्सरिकस्य चौलं कुर्वन्ति यथर्षि यथोपज्ञं वा[5] 'विज्ञायते च[5] यत्र बाणाः संपतन्ति कुमारा विशिखा इवेति बहुशिखा इवेत्यथान्नं[6] संस्कृत्य ब्राह्मणान्भोजयित्वाशिषो वाचयित्वान्तरागारे ऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति पूर्णा पश्चादिमं[7] मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्यनभिशस्तीश्च यदस्य कर्मणो ऽत्यरीरिचं

---

1) Thus N Bh, G *anuvīkṣateta* Pr *anuvīkṣeta* 2) N वोऽभयम्, Bh *vobhayam*, Pr *vo abhayam* G om 3) N om 4) Thus Bh, G om *yo* and *etāvannānā*, N om यो मेधाजनन 5) G om 6) Thus N, G °*arthānnam* 7) G om from *imam* unto *gurave*

प्रजापत इत्युंत्तमां हुत्वा गुरवे वरं ददात्यपरेणाग्निं गोमयपिण्डं सर्वबीजानीत्युपनियम्य सर्वबीजानामग्रं गोमयपिण्डे न्युप्य शीतोष्णा[1] अपः[1] समानीय[2] ताभिरस्य दक्षिणं गोदानमुनत्त्याप[3] उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इति 'त्रेण्या शलल्या विनीय त्रीणि दर्भपुञ्जीलान्यूर्ध्वाग्राण्युपनियच्छत्योषधे[4] त्रायस्वैनं स्वधिते मैनं हिंसीरिति लोहितायसं क्षुरं तिर्यञ्चं निधाय[5] प्रवपति यदृषीणां त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥ येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषे ऽवपत्तेन ते वपाम्यसौ दीर्घायुत्वाय वर्चस इत्येवमेवोत्तरं गोदानं वापयते 'केशान्वापयित्वा गोमयपिण्डे निदधात्यथैनं गोमयपिण्डं गोष्ठ उदकान्त उदुम्बरमूले दर्भस्तम्बे वा निदधात्यथैनं स्नातमलंकुर्वन्ति' ॥ २८ ॥

इति भारद्वाजसूत्रे प्रथमः प्रश्नः ॥

---

अवणाकर्म व्याख्यास्यामः 'श्रावण्यां पौर्णमास्यामुपकल्पयते ऽक्षतधानाश्चाक्षतसक्तूंश्च[6] ज्ञात्यं चाञ्जनमंस्तामित

---

1) N शीतोष्णा अाप , G Bh śitoṣṇāpas 2) Thus G Pr, N समानाय

3) G Bh Pr °unakty°, N °नुत्त्या° 4) Thus G, N °ण्युपनिधाय षोधे

5) Thus N Pr, G om 6) Thus N, G °dhānāścakṣatasaṃjñaṃśca, Bh dhānāścakṣatantyajnaṃśca

आदित्य ऽन्तरागारे ऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत
इति हुत्वाक्षतधानानां[1] चाक्षतसक्तूनां[1] च समवदाया-
भिघार्य जुहोत्यग्नये पाण्डराय पार्थिवानामधिपतये
स्वाहेति प्रथमामाहुतिं जुहोति ' श्वेताय वायव्यायान्तरि-
क्षाणामधिपतये स्वाहेति द्वितीयामभिमुखे सूर्याय दिव्या- 5
नामधिपतये स्वाहेति तृतीयामुपनिष्क्रम्य स्थण्डिल[2]
एवैता आहुतीर्जुहोत्यपि वा समीची नामासि प्राची[3]
दिगिति[3] सर्पाहुतीः[4] ' प्राशनार्था[5] धाना उपकल्प्या-
क्षतधानाश्चाक्षतसक्तूंश्च[6] जात्यं चाञ्जनं स्थण्डिले न्युप्या-
भिमन्त्रयते नमो अस्तु सर्पेभ्य इति तिसृभिस्ततो यावन्तं 10
देशं कामयत[7] इमं[7] सर्पा नागच्छेयुरिति तं संततयो-
दधारयानुपरिषिञ्चत्यप[8] श्वेत पदा जहि पूर्वेण चापरेण
च । सप्त च मानवीरिमास्तिस्रश्च राजबन्धवैः[9] ॥ न वै
श्वेतस्याध्याचारे[10] ऽहिर्ददंश कं[11] चन । श्वेताय वैद-

---

1) Thus N, G °*dhānāncakṣatasamjñān* 2) G N Bh *sthandilam*, but see introd 3) G *prācīdagiti*, N प्राचोरिति See TS V 5 10 1 4) Thus Bh, G *sarvā āhutīh*, N सर्पति 5) G *prāśanārtthan*, N प्रासनाथा, Bh *prāśadhanārtthā* 6) G *utkalpyākṣatadhāścakṣatasamjñāśca*, N very corr, Bh *upakalpya* 7) G B *kāmayate imam*, N कामयेगु 8) G *santatodadhārayā°*, N °धारयापरिषिञ्च° 9) G *lājabandhavaih*, N राजवधवै, see HG II 16 8 10) G °*ārddhamaddhyācāre*, N °स्याचारे 11) Thus G N, see, however, HG II 10. 8, PG II 14 5.

र्व्याय नम इति ' तत एता धाना अश्मेत्यावगिरन्ति यावन्तो हविरुच्छिष्टाशा भवन्ति ' तत एतांश्चतुरो[1] मासान्सर्पेभ्यो बलिं हरन्ति ' सक्तून्त्वेवमर्थान्कुर्वन्त्यपि वा यद्यदन्नं क्रियते तस्य तस्य ' ॥ १ ॥

5 तत आग्रहायण्यां पौर्णमास्यामिवमेवैतत्कर्म क्रियते ' यदन्यद्धानाप्राशनात्परिषेचनादिति सर्वं तत्क्रियत ' आग्नेयेन स्थालीपाकेन पर्वतु यजते ' तस्य पुरस्तात्स्विष्टकृत एता आहुतीर्जुहोतीडायाः पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां 10 सप्तानामिह रन्तिरस्तु पुष्ट्यै स्वाहा ॥ यां देवाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा ॥ पौर्णमासी[2] पूरयन्त्यायात्यपरापरम्[3] । अर्धमासान्विभजन्ती सा नः पूर्णाभिरक्षतु स्वाहा ॥ शिवा पशुभ्यो[4] दारेभ्यः शिवा नक्त शिवा 15 दिवा । संवत्सरं[5] कल्पयन्ती सा नः कामदुघा भवत्स्वाहा[6] ॥ पूर्णा पश्चादुमग्ने अयासि प्रजापत इति तिस्रस्ततः[7] सौविष्टकृतं जुहोत्यग्नये स्विष्टकृते स्वाहेत्यथ

---

1) Thus Bh, G N एताश्चतुरो 2) Thus Bh, G *pūrnamāsi*, N पौर्णमासीं 3) G *pūrayımtyā ety°*, N Bh *pūrayantyāyety°* 4) Thus N Bh, G *patibhyo* 5) G *tatsara*, N सजत्सरस्य 6) Thus G, N भव स्वाहा 7) G om *tatah*, N ततस तत

हेमन्तप्रत्यवरोहणं ' यत्र प्रत्यवरोहन्भवति[1] तदुपतिष्ठते[2] प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे[3] प्रत्यश्वेषु प्रति तिष्ठामि गोषु । प्रति प्रजायां प्रति तिष्ठामि भव्ये[4] ॥ स्योना पृथिवि नो[5] भवानृक्षरा निवेशनी[6] । यच्छा नः[7] शर्म सप्रथा इति ' ॥ २ ॥

शालाकर्म व्याख्यास्यामः ' शालां कारयिष्यमाण[8] आपूर्यमाणपक्षे पुण्ये नक्षत्रे ब्राह्मणानन्नेन परिविष्य परिलिख्येहैव[9] ध्रुवां[9] निमिनोमि[9] शालां क्षेमे तिष्ठतु घृतमुक्षमाणा । तां त्वा[10] शाले[10] सर्ववीराः सुवीरा अरिष्टवीरा अनुसंचरेमेति दक्षिणां द्वारस्थूणामुच्छ्रयतीहैव ध्रुवा[11] प्रतितिष्ठ शाले अश्ववती गोमती[11] सूनृतावती । ऊर्जस्वती पयस्वती घृतवत्युच्छ्रयस्व[12] महते सौभगायेत्युत्तरामां[13] त्वा कुमारस्तरुण आ वत्सो जगता[14] संह । आ त्वा परिस्रुतः[15] कुम्भ आ दध्नः कल-

1) Thus G, N प्रत्यवरोहा न भवति; Bh *pratyavarohayuyan bhavati*
2) G Bh °*upadusthate*, N °पतिष्ठते
3) Thus N Bh, G *rutle*
4) G *bharyo*, N दृष्टे
5) G om
6) G *nivekasani*, N निवेशिनी
7) G om the visarga
8) Thus Bh, G *kārayamāna*, N कारयिष्यमाण
9) G *parilikhya thairāminomi*, N परिलिख्य ध्रुवा निमिनोमि
10) Thus N, G *cāśāle*
11) G om
12) G om *ghrtavaty*, N घृतवत्य; but see AV III 12. 2.
13) Thus N, G °*uttarenamā*
14) Thus N, G *gajagatā*
15) G N *parisrtah*, see MG II. 11 12, AG II 8. 16, PG III 4 4 Āp MB II 15. 4

शीर्यन्निति[1] संमिते[2] अभिमृशत्येवमेव स्थूणाराजावु-
च्छ्रयत्येवमभिमृशत्यृतेन[3] स्थूणावधिरोह वंशोग्रो[4] वि-
राजन्नपसेध[5] शत्रून् । अथास्मभ्यं सर्ववीरां रयिं दा इति
पृष्ठवंशमधिरोपयति 'मानस्य[6] पत्नि[6] शरणा[6] स्योना
5 देवेभिर्विमितास्यग्रे । तृणं वसाना[7] सुमना[7] असस्त्वं[8]
शं न[9] एधि[9] द्विपदे शं चतुष्पद[10] इति[10] छन्नाम-
भिमृशति[11]' ॥ ३ ॥

अगारप्रवेशं[12] व्याख्यास्याम 'आपूर्यमाणपक्षे[13] पुण्ये
नक्षत्रे ऽन्तरागारे ऽग्निमुपसमाधाय जयाभ्यातानान्राष्ट्रभृत
10 इति हुत्वैता आहुतीर्जुहोति वास्तोष्पत इति द्वे 'वा-
स्तोष्पते प्रतरणो न[9] एधि[9] गयस्फानो[14] गोभिर-
श्वेभिरिन्दो[15] । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति
नो जुषस्व स्वाहा ॥ परं मृत्यो अनुपरेहि पन्थां यस्ते
स्व इतरो देवयानात् । वास्तोष्पते शृण्वते ते ब्रवीमि

---

1) G *kalariyannıtı*, N कलशीरियमिति  2) Thus N, G *sajyate*
3) Thus Bh, G N °*etena*  4) Thus G, N वशोर्ध्वो. See HG I 27. 7, Āp MB II 15 5  5) Thus N, G °*apasetha*  6) Thus AV III 12. 5, G *mānasvapatnaśśaraṇārthe*, N मा न सपत्न शरणा, Bh *mānassapatlaśśareṇā*  7) Thus N, G *ɩasanāssuno*  8) G *adhastıam*, N धस, see AV III 12 5  9) G *nayedhı*  10) Thus emended G N *catuṣpade*  11) G *chśantābhi*°, N उह्नमामभि°  12) G *akāra*°
13) G om from *mānapakṣe* unto *āhutir*° I 10  14) Thus N, G *gayasthāno*  15) G N °*ındro*, see RV VII 54 2, HG I 28 1 etc.

मा नः प्रजां रीरिषो मोत[1] विरास्वाहेति ' भूमिमभि-
मृशति प्रति क्षत्रे प्रति तिष्ठामि राष्ट्र इति द्वाभ्यामिदं
श्रेयो ऽवसानं[2] यदागां स्योने[3] मे द्यावापृथिवी अभू-
ताम् । अनमीवाः प्रदिशः सन्तु मह्यं गोमद्धनवदश्ववदू-
र्जस्वत्सुवीरवदिति[4] चैतयाहतं वास आच्छाद्य तद्वास्तु 5
परिमापयेदृतं[5] वृणीष्व मावार्य[6] मा नो हिंसीः कदा-
चन ॥ स्योना पृथिवि भवानृक्षरा निवेशनी[7] । यच्छा
नः शर्म सप्रथा इत्युंदायुषा स्वायुषेत्युपोत्थायोपसमूह्य
ब्राह्मणानन्नेन परिवेषयेत् ' ॥ ४ ॥

तत्पूर्वं वास्तुशमनमंयान्यच्छंरणो कृत उदुम्बरपला- 10
शानि[8] सशुपिराणि[9] यवैः सह गोमयं शाड्वलं[10]
रासभं[11] मधु चैवात्र[12] सततं तैरगारं वास्तु च परि-
प्रोक्षेत्पूर्ण उदधिर्भवति प्रज्वलितो[13] अग्निर्भवति[13] ' ब्रा-
ह्मणमग्रे प्रवेशयति[14] ' ब्राह्मणमाह प्रविशानीति ' प्रवि-

---

1) Thus N, G om *mo* 2) Thus N, G *vasanam* 3) Thus N, G *syona* 4) G °*jasva asuvirāditi*, N °स्वत्सुवीरवदिति 5) Thus Ph; G °*rita*, N °दृता 6) G *māmabiryya*, मावार्य, Bh *mārd* 7) Thus G, N निवेशिनी 8) Thus N Bh, G *audumbara*° 9) Thus G Bh, N सशिराणि 10) Thus G B, N --घन 11) Thus G, N रासर; Bh *rasabham* 12) Thus G Bh, N चैव तु 13) Thus G Bh, N प्रज्वलितादि° 14) Thus Bh, G *pravesati*, N om

शतु भवानायुषा[1] वर्चसा[2] श्रियावृत[3] इति ब्राह्मणा-
नुमतः प्रविशति भूः प्रपद्ये भुवः प्रपद्ये श्रियं प्रपद्ये
श्रीर्मा प्रविशत्विति[4] ' ब्राह्मणमनु[5] प्रविश्य ज्याभ्याता-
नाव्राष्ट्रभृत इति हुत्वाग्निं देवानां महयत्यग्निर्देवानामधि-
5 पतिः पुरीष्यो[6] हव्यवाहनः[7] । तं त्वैमि[8] शरणं देव
सपुत्रः[9] सह ज्ञातिभिः स्वाहा ॥ सदासभार्यः सामात्यः
सायामग्नये स्वाहेत्यग्निं महयित्वाथ राजानमीडते[10] त्वद्दत्तं
वै बलं राज्ञे त्वत्पूर्तमिह[11] जीवते । हिरण्यवर्ण हर्यक्ष
अर्घ मह्यं साधय स्वाहा ॥ कुबेराय[12] स्वाहा[12] महा-
10 राजाय स्वाहा वैश्रवणाय स्वाहेति ' राजानं महयित्वाथेन्द्रं
देवानां महयति त्रातारमिन्द्रमिन्द्रं विश्वा अवीवृधन्नि-
तीन्द्रं महयित्वा विश्वान्देवान्महयति विश्वे देवा विश्वे[13]
देवा[13] इति द्वाभ्यां[12] ' विश्वान्देवान्महयित्वा ॥ ५ ॥

अथ पञ्चेध्मानभ्याधाय[14] जुहोति मेधां मनसि जुहोमि
15 स्वाहा ॥ मनो मेधायां जुहोमि स्वाहा ॥ श्रद्धां तपसि

---

1) Thus N, G °*āyuṣmān*, N ins तेजसा 2) N ins यशसा 3) Thus G, N श्रिया घृत 4) G *viśatviti*, N प्रविशति 5) G *brāhmaṇā-numatah*, N ब्राह्मणानु 6) Thus emended, G *puñjuṭho*, N पुरिष्ठो 7) Thus N, G *hajanah* 8) Thus emended, G *tannaumi*, N त चैमि 9) G *svaputras*, N सूत्रदा 10) Thus N Bh, G *rājadhānim*° 11) Thus N, G *tvaddattam*° 12) G om 13) N om 14) Thus Bh, G *pañcorddhān*°, N पञ्चेध्मान°

जुहोमि स्वाहा ॥ तपः श्रद्धायां जुहोमि स्वाहा ॥
मृत्योर्मुखं विदधामि स्वाहा ॥ ये देवाः पुरःसदो ऽग्नि-
नेत्रा[1] रक्षोहणास्ते नः पान्तु ते नो ऽवन्तु तेभ्यो[2]
नमस्तेभ्यः स्वाहा[3] ॥ शान्तमिदमवसानं[4] प्रपद्ये[5] स्वा-
हा ॥ ये देवा दक्षिणसदो[6] ये देवाः पश्चात्सदो ये देवा 5
उत्तरसदो ये देवा उपरिषदो बृहस्पतिनेत्रा रक्षोहणास्ते[7]
नः पान्तु ते नो ऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा[8] ॥
शान्तमिदमवसानं प्रपद्ये स्वाहा ॥ पूर्णा पश्चादिमं मे
वरुण तत्त्वा यामि त्वं नो अग्ने स[8] त्वं[8] नो[8] अग्ने[8]
त्वमग्ने अयास्ययाश्चाग्ने ऽस्यनभिशस्तीश्च यदस्य कर्मणो 10
ऽत्यरीरिचं प्रजापत इत्युत्तमां हुत्वा ब्राह्मणानन्नेन परि-
वेषयेद्यद्वास्तु गर्हितं यत्र वान्यः[9] परिभवेत्तत्रापि सुख-
मासीत शमयन्वास्त्वृतावृतावेतद्धौम्यस्य[10] वचनमसितस्य
तुरङ्गस्य च मुनेः काव्यस्य दाल्भ्यस्य 'नैतद्विद्वान्पराभ-
वेत्[11]' ॥ ६ ॥ 15

---

1) Thus N Bh, G *gnenetri*  2) Thus N, G तेनो  3) G N om, see TS I 8 7 1, 2  4) Thus N, G *śāntim°*  5) Thus N, G Bh *pratipadye*  6) G ins. *yamanetrā*  7) G om from *rakṣohanas°* unto *uttamām* l 11  8) N om  9) Thus N Bh, G *cānnyah*  10) G *°vāstu nastvatavutātāvetachśaumya*, N शमयन्ना स्मृतावेत°, Bh *ertāvrtau etaddhaumyasya*  11) N *°vidvānna°*, if we insert ऽवेत् after गर्हित (l 12) and cancel च (l 14), the last passage is metrical (śloka)

श्वग्रहप्रायश्चित्तं ' श्वोपस्पृष्टे[1]) तद्यज्ञोपवीतं कृत्वाप
आचम्यानाप्रीतेन शरावेणानुस्रोतसमुदकमाहृत्याग्र सभा-
यां[2]) मध्ये ऽधिदेवनमुद्धत्यावोक्ष्याक्षान्न्युप्याक्षेषु हिरण्यं
निधायोपरिष्टात्सभायां व्यूह्य तृणानि तेन कुमारमन्व-
5 वहृत्याक्षेषूत्तानं[3]) निपात्य[4]) दध्ना लवणोदकमिश्रेणा-
भ्युक्ष्य जपत्यांघ्नन्ति कंसं दक्षिणतः ' कुर्कुरः[5]) सुकुर्कुरः[5])
कुर्कुरो[5]) वालबन्धनः[6]) । उपरिष्टाप्यदेज्ञाय तृतीयस्या-
मितो दिवि ॥ श्रौलव[7]) इत्तमुपाह्वयाथासीच्छ्यामः[8])
शबलः । अधोराम उलुम्बलः सारमेयो ह धावति
10 समुद्रमिव[9]) चाकशत्[10]) ॥ विभ्रन्निष्कं[10]) च रुक्मं च शुना-
मग्रं[11]) सुवीरिणः[12]) । सुवीरिणा[13]) सृज सृजैकव्रात्य[14])
शुनक[14]) सृज हृत् ॥ तत्सत्यं यत्त्वेन्द्रो ऽब्रवीद्धा स्वा-
शयस्वेति[15]) तास्त्वं[16]) स्वाशयित्वागच्छस्तं[17]) त्वाब्रवीद्-
विदह्या[17]) इत्याविदं[17]) हीति[18]) वरं वृणीष्वेति कुमा-

---

1) Thus N, Bh *śvā upasprste*, G *śvo bhūte* 2) Thus Bh, N समाया, G *samādhāya* 3) Thus N Bh, G *°kṣerūkta* 4) G om 5) Thus G, N कुकूकुर स कुकूकुरो, Bh *krkuras sukrkura* 6) G *vālabandhanah*, N वात्येवधाा 7) Thus Bh, G *aulasa* 8) G *uttam upāhvayatāthājjirchsyamaś*, N -त्तमुपाह्वय वात्तोभ्या, see HG II 7 2, Āp MB II 16 2 9) Thus N, G *samudra iva* 10) G *cākaśacibhranniṣkan*, N °त्रिगुर्निं° 11) Thus N, G *śvanām°* 12) G om, N च वीरिपा 13) G *suvirana*, N सुविरीपा 14) G *°vrūtyaścanaka*, N सूनैक चात्म मुनच 15) G *spāyaśasveti*, N स्मायशोति 16) G *tāmstvam*, N तात 17) G *°avidahayity°*, N °गड़ । तत तातवीर विद्वाश इय° 18) G *iti*, N त्तोति

रमिवाहं वरं वृण इत्यब्रवीः ॥ निगृह्य वाङ्क प्रवसे[1]
ज्यामिव[2] चाकशत् ॥ विश्वन्निष्कं च रुक्मं च शुनामग्रं
सुवीरिणः[3] । सुवीरिणा[4] सृज सृजैकत्राल्य शुनक सृज
इत् ॥ तत्सत्यं यत्ते सरमा माता लोहितः पिता ।
अमी ये[5] के[5] सरस्यका अवधावति तृतीयस्यामितो 5
दिवि ॥ तेकश्च ससरमतण्डुलः कुलश्च विकुलश्चार्जुनश्च
लोहितश्च[6] । उत्सृजेमं[6] शुचीमनस्त्वं पिशङ्गलोहितः[7]॥
दुला ह नाम वो माता मण्डाकको[8] ह वः पिता ।
इदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर ॥ सं
तत्वा हन्ति चक्री वो[9] न सीसरीदत । इदपेहि सीस- 10
रम[10] सारमेय[10] नमस्ते अस्तु सीसर ॥ समश्चा[11]
वृषणः पदो न सीसरीदत । श्वानमिच्छादन्न पुरुषं[12]
इदिति' त्रिः प्रातर्मध्यंदिने सायमगदो हैव[13] भवती-
त्याह[13]'ततः कुर्याद्यदि नागदः[14] स्यात्' ॥ ७ ॥
शूलगवं व्याख्यास्याम 'आपूर्यमाणपक्षे पुण्ये नक्षत्रे 15

---

1) G *svavase*, N प्रुवसे 2) G *jyām°*, N corr 3) G *subīranah*, N सुत्रीरिणा 4) G *subırana*, N सुत्रीरिणा 5) Thus G, N एये 6) G *°taścotvajemam*, N °तश्चोत्सृजेम 7) Thus G, N °रोहित 8) G *kandākako*, N मण्डाकको 9) Thus N, G *vera* 10) N सीसरम°, G *sısārameya* 11) Thus N, G *samaśca* 12) G *gata*, N परिविष्ठ, see Āp MB II 16 11. 13) Thus N Bh, G *vetyāha* 14) Thus N Bh, G *vānadata*

पयसि स्थालीपाकं श्रपयित्वा प्राचीं वोदीचीं वा दिश-
मुपनिष्क्रम्य स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय संपरि-
स्तीर्यापरेणाग्निं द्वे कुटी कृत्वा शूलगवमावाहयत्या त्वा
वहन्तु हरयः सुचेतसः[1] श्वेतैरश्वैः सह केतुमद्भिः ।
5 वाताजिरैर्मम हव्याय शर्वोमिति ' दक्षिणस्यां शूलगव-
मुत्तरस्यां मीढुषीं मध्ये जयन्तं ' यथोढमुदकानि प्रदाय
त्रीनोदनानुद्धृत्य यथोढमेवोपस्पर्शयत्युपस्पृशतु[2] मीढ्वा-
न्मीढुषे स्वाहोपस्पृशतु मीढुषी मीढुष्यै स्वाहा जयन्तो-
पस्पृश जयन्ताय स्वाहेति ' शूलगवस्याग्निमभ्युदाहृत्य
10 जुहोति भवाय देवाय स्वाहा शर्वाय देवाय स्वाहेशा-
नाय देवाय स्वाहोग्राय देवाय स्वाहा भीमाय देवाय
स्वाहा रुद्राय देवाय स्वाहा पशुपतये देवाय[3] स्वाहा
महते देवाय स्वाहेति ' ॥ ८ ॥

पत्न्योदनस्य पत्नीभ्यो जुहोति भवस्य देवस्य पत्न्यै
15 स्वाहा शर्वस्य देवस्य पत्न्यै स्वाहेशानस्य देवस्य पत्न्यै
स्वाहोग्रस्य[3] देवस्य[3] पत्न्यै[3] स्वाहा भीमस्य देवस्य '
पत्न्यै स्वाहा रुद्रस्य देवस्य पत्न्यै स्वाहा पशुपतेर्देवस्य

---

1) G *suketubhı*, N स्नुसचेतस ; see MS II 9 1, HG II 8 2, Āp MB II 18 10   2) G *°vopasprśannupasprśatu*, N °वोपस्पृशति उपस्पृशति, Bh *upasparśayıtvā*   3) G om

पत्न्यै स्वाहा महतो देवस्य पत्न्यै स्वाहेति ' जयन्ताय
स्वाहेति मध्यमस्य जुहोति ' सर्वेषामोदनानां सकृत्सकृ-
त्समवदायाभिघार्य जुहोत्यग्नये स्विष्टकृते स्वाहेत्यंवोपति-
ष्ठते स्वस्ति नः पूर्णमुखः परिक्रामत्वित्यंथातः पर्णवि-
हारो ' गृहपोपस्पृश गृहपाय स्वाहा गृहप्युपस्पृश गृहप्यै 5
स्वाहा जयन्तोपस्पृश जयन्ताय स्वाहेति षट् पलाशा-
न्यंथापराणि घोषिण उपस्पृशत घोषिभ्यः स्वाहा श्वासिन
उपस्पृशत श्वासिभ्यः स्वाहा विचिन्वन्त उपस्पृशत वि-
चिन्वद्भ्यः स्वाहा प्रचिन्वन्त उपस्पृशत प्रचिन्वद्भ्यः स्वाहा
समश्नन्त उपस्पृशत समश्नद्भ्यः स्वाहेति दशांथापराणि 10
देवसेना उपस्पृशत देवमेनाभ्यः स्वाहेति दशैवांथापराणि
या आख्याता देवसेना याश्चानाख्यातास्ता उपस्पृशत
ताभ्यः स्वाहेति दशैव ' ॥ १ ॥

अथांपराणि द्वारपोपस्पृश द्वारपाय स्वाहा द्वारप्युप-
स्पृश द्वारप्यै स्वाहेति चत्वार्यंथ पर्णपुटं [1] कृत्वा तस्मि- 15
न्नुपस्तीर्णाभिघारितमोदनपिण्डं समवदाय [2] परोगोष्ठे [2]
वृक्ष आसजति निषङ्गिण उपस्पृशत निषङ्गिभ्यः [3] स्वा-

1) G *pamkuputam*, N वर्णयुग, Bh *parnapūgam*

2) Thus N, G °*dāyāpare goṣṭhe*, Bh *aparagosthe*

3) G *nuṃmgıbhya*, N णिषङ्गिणो

ह्नेत्यथोपतिष्ठते नमो निषङ्गिण[1] इषुधिमत[2] इत्यप्रती-
चमित्याद्यान्वासारिभ्यो जुहोत्यन्वासारिण उपस्पृशतान्वा-
सारिभ्यः[3] स्वाहेति द्वे पलाशे ' अथोपतिष्ठते[4] नमस्ते
रुद्र मन्यव इत्येतैरेकादशभिरनुवाकैः प्रथमोत्तमाभ्यां
5 वाभित एतमग्निं[5] गा[5] स्थापयति[5] यथा धूममाजिघ्रेयु-
रित्याज्यशेषमोदनशेषमुदकुम्भशेषमित्येकधा समवनीयो-
दुम्बरशाखया प्रदक्षिणं[2] गास्त्रिः[6] प्रोक्षति शिवं गोभ्यः
शिवं गोपतय इत्यृषभस्य पृष्ठे शेषं निनयत्येतं युवा-
नमित्येताभिः पञ्चभिरथातः क्षैत्रपत्यस्य[7] ' गवां मार्गे
10 ऽनग्नौ[8] क्षेत्रस्य पतिं यजते क्षेत्रस्य पतये स्वाहेति
चतुर्षु सप्तसु वा पलाशेषु ' तं तथावाह्यति[9] यथा
शूलगवं ' तूष्णीं यजते ' पाकौ देव ' उपतिष्ठते क्षेत्रस्य
पतिना वयमिति द्वाभ्यामथैनं क्षैत्रपत्यं[10] ये[11] सना-
भयो[11] भवन्ति ते प्राश्नन्ति[12] यथा वैषां कुलधर्मो
15 भवति ' ॥ १० ॥

अमावास्यायामपराह्णे मासिश्राद्धमपरपक्षस्य[13] वायु-

---

1) Thus N Bh; G *niṣihina* 2) G om 3) G om the visarga
4) Thus Bh; G N corr 5) Thus G Bh, N °ग्निंमास्थापयन्ति
6) G om *gās* 7) Thus Bh; G N *kṣetra°* 8) G Bh *nāgnau*
9) Thus N Bh, G *tantatānnayati* 10) Thus Bh, G N *kṣetra°*
11) G *esanābhayo*, N सेनाद्यो 12) Thus Bh; G *prāśna*; N प्राश्नन्ति
13) Thus N Bh, G *°pakṣasu*

ह्वयन्तु' पितृभ्यो ऽन्नं संस्कृत्य प्राचीनावीती कृत्वाग्निमु-
पसमाधाय दक्षिणाप्रागग्रैर्दर्भैरग्निं परिस्तीर्य दक्षिणापूर्व-
मवान्तरदेशमभिमुखः[1] पितॄनावाहयत्यायात पितरः सो-
म्या गम्भीरैः पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददतो रयिं
च दीर्घायुत्वं च शतशारदं च ॥ आयात पितामहाः प्रपि-
तामहाश्चानुगैः सह[2] । असुंगमाः[2] सत्ययुजो ऽवृकासः ।
आ नो हवं पितरो ऽभ्यागमन्तु । एह गच्छन्तु पितरो
हविषे अत्तवा[3] इत्येतामेव दिशमभ्यपः[4] प्रसिञ्चत्यापो
देवीः प्रहिणुतेमं यज्ञं पितरो नो जुषन्तां[5] मासीनामू-
र्जमुत[5] ये भजन्ते ते नो रयिं सर्ववीरं नियच्छन्त्विति'
परिषिच्य जुहोति याः प्राचीः संभवन्त्याप उत्तरतश्च याः ।
अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे ऽमुष्मै
स्वाहा ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । दिवा
दिग्भिरनन्ताभिरूतिभिरन्तरन्यं[6] पितामहाद्दधे ऽमुष्मै स्वा-
हा ॥ अन्तर्दध ऋतुभिरहोरात्रैः[7] ससंधिकैः[7] । अर्धमासैश्च
मासैश्चान्तरन्यं प्रपितामहाद्दधे ऽमुष्मै स्वाहा ॥ यद्वः

---

1) G *dakṣiṇam°* 2) Thus Pr, G *sahāyumgamās*, N सहारुङ्गमात्
3) Thus G, N अत्तव, Pr *attave* 4) G *°āpa*, N °भ्याप 5) G N Pr *juṣantāmāsīnām°* 6) G om *ūtibhir* 7) Thus G, N °सुगधिभि, Pr *°rātraiśca sandhigaiḥ*

क्रव्यादङ्गमदल्लोकानयं[1] प्रणयञ्जातवेदाः । तद्वो अहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः[2] स्वधा नमः पितृभ्यः[3] स्वाहेति ॥ ११ ॥

अथान्नस्य जुहोत्यग्नये पितृमते स्वाहा सोमाय पितृमते 5 स्वाहा यमायाङ्गिरस्वते पितृमते स्वाहा स्वधा नमः पितृभ्यः स्वाहाग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः पितृभ्यः[3] स्वाहेति परिषिच्य दक्षिणतो दर्भमुष्टिं निधाय तस्मिन्दक्षिणापवर्गांस्त्रीनुदकाञ्जलीनुपनिनयत्यसाववनेनिक्ष्वेति[4] पितरमसाववनेनिक्ष्वेति[5] पितामहमसाव-10 वनेनिक्ष्वेति[6] प्रपितामहमंत्रेव[7] नामादिशमवाचीनपाणिस्तस्मिन्दक्षिणापवर्गांस्त्रीन्पिण्डान्निदधात्येतत्ते ततासौ मधुमदन्नं सरस्वतो यावानग्निश्च पृथिवी च तावत्यस्य मात्रा तावती त एतां मात्रां भूतां ददामि यथाग्निरक्षितो ऽनुपदस्त एवं मह्यं पित्रे[8] ऽक्षितो ऽनुपदस्तः[2] स्वधा 15 भवतां त्वं स्वधामक्षितं तैः सहोपजीव यांश्च[9] त्वमत्रान्वसि[9] ये च त्वामनु ॥ एतत्ते[10] पितामहासौ मधुमदन्नं

1) Thus Pr, G °*adamgāllokānnayan*, N °दहलोकान्नयन् 2) G Pr om the visarga 3) G om the visarga 4) Thus N, G °*animkṣveti*, Bh °*avanimksveti*, Pr *avaneniyumkṣva* 5) Thus N, G °*amksveti*, Pr *avaneniyumkṣva* 6) Thus N, G °*avanimkṣveti*, Pr *avaneniyumkṣva* 7) N om from प्रपितामहम् unto स्वधामक्षित l 15
8) Thus Pr, G *pitrai* 9) Thus G N, Pr *yamścātramatvāmasi*
10) N om from एतत्ते unto यत्र पितरो p 45 l 11, inserting इति before यत्र

सरस्वतो यावान्वायुश्चान्तरिक्षं च तावत्यस्य मात्रा ता-
वतीं त एतां मात्रां भूतां ददामि यथा वायुरक्षितो
ऽनुपदस्त एवं मह्यं पितामहायाक्षितो ऽनुपदस्तः[1] स्वधा
भवतां त्वं स्वधामक्षितं तैः सहोपजीव यांश्च त्वमत्रान्वसि
ये च त्वामनु ॥ १२ ॥ 5

एतत्ते प्रपितामहासौ मधुमदन्नं सरस्वतो यावानादि-
त्यश्च द्यौश्च तावत्यस्य मात्रा तावतीं त एतां मात्रां
भूतां ददामि यथादित्यो ऽक्षितो ऽनुपदस्त एवं मह्यं
प्रपितामहायाक्षितो ऽनुपदस्तः[1] स्वधा भवतां त्वं स्वधा-
मक्षितं तैः सहोपजीव यांश्च त्वमत्रान्वसि ये च त्वामनु॥ 10
अत्र[2] पितरो[2] यथाभागं मन्दध्वमित्युक्त्वा पराङावर्तत'
आोष्मणो[3] व्यावृत उपास्ते' व्यावृत्त ऊष्मण्यभिपर्यावर्तते
ऽव्यावृत्ते वामीमदन्त पितरः सोम्या[4] इत्यभिपर्यावृत्य[5]
नमस्कारैरुपतिष्ठते नमो वः पितरो रसायेति प्रतिप-
द्याहं तेषां वसिष्ठो भूयासमित्यन्तेनाद्भिः पात्रं प्रक्षाल्य 15
पूरयित्वा[6] प्रसव्यं[6] त्रिः परिषिञ्चति पुत्रान्पौत्रानभित-
र्पयन्तीरापो मधुमतीरिमाः। स्वधां पितृभ्यो अमृतं दुहाना

---

1) G Pr om the visarga 2) Thus N Pr, G *tato* 3) Thus N, G Pr *ūṣmaṇo* 4) Thus G, Bh *saumyā*, Pr *saumyāsaḥ* 5) Thus Bh Pr, G *ti paryābhṛtyā*, N इत्यभिमन्त्र्यावृत्य 6) Thus N Bh, G °*tvāpasavyam*, Pr *aprasavyam*

आपो देवीरुभयांस्तर्पयन्तु ॥ ऊर्जं वहन्तीः[1] क्षीरमुदकं घृतं पयः कीलालं परिस्रुतं नदीरिमा उदन्वतीर्वेतस्विनीः[2] सुतीर्थ्या[3] अमुष्मिन्लोक उप वः क्षरन्तु । ऊर्जस्वतीः पयस्वतीर्मधुना घृतेन स्वधा स्थ तर्पयत मे पितॄ-
5 नित्यंप्रतीक्षमित्य ॥ १३ ॥

अथान्नमभिमृशति पृथिवी ते पात्रं द्यौरपिधानं[4] ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिन्लोके पृथिवी[5] समा[5] तस्याग्निरुपद्रष्टर्चस्ते[5][6] महिमा ॥ पृथिवी ते पात्रं[7]
10 द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिन्लोके अन्तरिक्षं समं तस्य वायुरुपद्रष्टा सामानि ते महिमा ॥ पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि
15 मैषां क्षेष्ठा अमुत्रामुष्मिन्लोके द्यौः[8] समा तस्यादित्य उपद्रष्टा यजूंषि ते महिमेति ' ब्राह्मणानन्नेन परिविष्य

---

1) G N Bh Pr om the visarga 2) G °vedasanis, N उदस्वतीर्वेतस्विनी, Pr °vedasunis 3) Thus N, G *sutirtiā*, Pr *sutirtthā* 4) Thus N, G °*abhidhānam* 5) Thus G N, see, however, Baudh Dh II 8 14 12, comp also Caland, Altind Ahnencult p 99 6) Thus N, Pr °*upadraṣṭā* | *ṛcas*°, G °*upadrṣtvā ṛcas*° 7) *From this point unto* ब्राह्मणान्° 1 16 G N abbreviate 8) G *dyau* +, N द्यौ समा, Pr *dyaus samā*

प्रदिष्टमुदपात्रं चादाय[1] दक्षिणपूर्वमवान्तरदेशं गत्वा
प्रदिष्टमुदपात्रेणोपप्रवर्तयति[2] परायात पितरः सोम्या
गम्भीरैः पथिभिः[3] पूर्व्यैः । अथ मासि पुनरायात नो
गृहान्हविरत्तुं सुप्रजसः सुवीरा इति ' सर्वतः समवदाय
शेषस्य प्राश्नातीदमन्नं पूर्यतां[4] चापूर्यतां[4] च[4] तन्नः सह 5
देवैरमृतमस्तु प्राणेषु त्वामृतं जुहोमि स्वाहेति ' ॥ १४ ॥

अष्टकां व्याख्यास्याम ' उपरिष्टान्माघ्याः प्राक्फाल्गु-
न्या[5] यो बहुलस्तस्याष्टमी[6] ज्येष्ठया संपद्यते ' तामेका-
ष्टकेत्याचक्षते ' तस्यां संभारानुपकल्पयते[7] ' गां प्रशस्या-
ष्टकापूपं चतुःशरावं तूष्णीं निर्वपति ' षट्कपालो भवत्ये- 10
ककपालो वा ' तस्य दार्विहोमिकः[8] संस्कारस्तामौपासने[9]
अपयित्वौपासन एव जुहोत्युलूखला ग्रावाणो घोषमक्रत
हविः कृण्वन्तः परिवत्सरीणाम्[10] । एकाष्टके सुप्रजा
वीरवन्तो वयं स्याम पतयो रयीणां स्वधा नमः पितृभ्यः
स्वाहा ॥ अयं चतुःशरावो घृतवानपूपः[11] पयस्वानग्ने[11] 15

---

1) Thus N Bh, G *cāvadāya* 2) Thus Bh, G corr, N प्रतिष्ठितमुदपात्रेणाप प्र° 3) G om 4) G *pūrtāñcāpūryyatāñca*, N पूर्यता च, Bh *āpūryyatāñcāpūryyatāñca* 5) Thus Bh, G *°phālgunyā*, N om 6) Thus N Bh, G *balastasyāmiṣṭami* 7) Thus G Bh, N °पकल्पो 8) G corr, N दार्विहोमिक, Bh *dārvikahomika* 9) G *°tām°* 10) N परिवत्सरीणा, G *parinam* 11) N °पूपत्रापयस्वा°, G *ghṛtavāna yasvām agne*

रयिमान्पुष्टिमांश्च । प्रतिगृह्णन्तु पितरः संविदानाः[1] स्विष्टः सुहुतो ऽयं ममास्तु स्वधा नमः पितृभ्यः स्वाहा ॥ वहापूपं जातवेदः पितृभ्यो यत्रैनान्वेत्थ[2] निहितान्पराके। अपूपकुल्या[3] उप तान्क्षरन्तु सत्या एषामाशिषः[4] सन्तु[4] कामैः[4] स्वधा[5] नमः[5] पितृभ्यः स्वाहेति ' पुरस्तात्स्विष्टकृत एता आहुतीर्जुहोति पूर्णा पश्चाद्यमग्ने अयासि प्रजापत इति तिस्रस्ततः सोविष्टकृतं जुहोत्यग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः पितृभ्यः स्वाहेति ' ॥ १५ ॥

श्वो भूते पितृभ्यो गामालभते ' ऽग्निमुपसमाधाय यथा पुरस्तादाज्येन प्रायश्चित्तं हुत्वैकेन[6] बर्हिषैकशूलया च वपाश्रपण्योपाकरोति ' पितृभ्यस्त्वा जुष्टामुपाकरोमीतीमां[7] पितृभ्यो गामुपाकरोत्यूर्जस्वती पयस्वती तां मे जुषन्तां[8] पितरः[8] समेताः । मेदस्वती घृतवती स्वधावती सा मे पितॄन्सांपरायै[9] धिनोत्वित्युपाकरणीयां[10] हुत्वा पितृभ्यस्त्वा जुष्टां प्रोक्षामीति प्रोक्षितां पर्यग्निकृतां प्रत्यक्शिरसं दक्षिणापदीं संज्ञपयन्ति ' संज्ञप्ताया[11] अद्भि[11] प्राणाना-

---

1) G N om the visarga 2) Thus G, N यत्रैना° 3) Thus N, G *apūpaḥ kulya* 4) Thus N G *eṣāmaśumaiḥ* 5) G om 6) Thus N Bh, G *hutvaika* 7) Thus G, N °मोति गा 8) G *juṣ* *ras*, N रयात्ना° 9) Thus G N, see HG II 15 2 10) G *dhinostvi°*, N चिनोस्त्वि° G N *°upākaraṇīyam*, Bh *upakaraṇīyumāhutim* 11) Thus Bh G *saṃjñapayitarotbhiḥ* N सज्ञपाया अद्भि

प्याय्य[1] तूष्णीमिव[2] वपामुद्धृत्य हृदयमुद्धरति[3] प्रज्ञाते च[4] मतस्ने 'औदुम्बर्या वपाश्रपण्यां वपां श्रपयित्वौदुम्बरेषु शूलेषु[5] पृथगितराणि[6] श्रपयित्वौदुम्बर्या दर्व्योपस्तीर्णाभिघारितां वपां जुहोति वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके । मेदसः कुल्या उप तान्त्स्रवन्तु सत्या एषामाशिषः सन्तु कामैः स्वधा[7] नमः[7] पितृभ्यः[7] स्वाहेति' ॥ १६ ॥

उपस्थिते[8] ऽन्न[8] ओदनस्य[8] मांसानामिति समवदाय सर्पिर्मिश्रस्य[9] जुहोत्येकाष्टकां पश्यत दोह्यमानामन्नं मांसवद्घृतवत्स्वधावत् । तद्ब्राह्मणैरतिपूतमनन्तमक्षय्यं[10] मे[11] अस्तु स्वधा नमः पितृभ्यः[12] स्वाहा ॥ एकाष्टका तपसा तप्यमाना संवत्सरस्य पत्नी दुदुहे[13] प्रपीना । तां दोहमुपजीवाथ पितरः सहस्रधा मुच्यमानां[14] पुरस्तात्स्वधा नमः पितृभ्यः स्वाहा ॥ बह्वन्नं जातवेदः पितृभ्यो यत्रैनान्वेत्थ[15] निहितान्पराके । अन्नस्य कुल्या

---

1) Thus N, Bh °*āpyāya*, G om *pyāyya* 2) G om *tūṣṇī*, N तुष्णीं 3) Thus Bh, N °द्धरत, G om 4) Thus Bh, G N om 5) Thus G Bh, N सल्वेषु 6) Thus G Bh, N यथि° 7) Thus N, G *pitṛbhya svadhā nama* 8) Thus N Bh, G *upasthitaudanasya* 9) Thus N Bh, G *sammiśrān* 10) N °रतिपूत पुतमक्षय, G °*atipratamanta makṣayyam* 11) G om 12) G om the visarga 13) G *daduhe*, N दुदे 14) Thus G, N दुह्यमाना 15) Thus G, N यत्रैताम्वे°

उप तान्त्सरन्तु सत्या एषामाशिषः सन्तु कामैः स्वधा[1]
नमः[1] पितृभ्यः[1] स्वाहेति 'पुरस्तात्स्विष्टकृत एतानुप-
होमाञ्जुहोतीयमेव[2] सा या प्रथमा व्यौच्छदेकाष्टका
तपसा तप्यमाना या प्रथमा व्यौच्छत्संवत्सरस्य प्रतिमां
5 प्रजापत इति पञ्च 'ततः सौविष्टकृतं जुहोत्यग्नये कव्य-
वाहनाय स्विष्टकृते स्वधा नमः पितृभ्यः स्वाहेति 'श्वो
भूते पितृभ्यो मांसशेषेण मासिश्राद्धस्यावृता श्राद्धं[3]
करोति ' ॥ १७ ॥

वेदमधीत्य स्नास्यन्नुपकल्पयते पालाशीं[4] समिधमुद-
10 पात्रं चैरकां चोपवर्हणं च स्नानीयपिण्डं च सार्वसुर-
भिपिष्टं चन्दनं च सूत्रं सोपधानं मणिं सयाणं बादरं
मणिमुत्तरासङ्गं च सान्तरमहते च प्रवर्तौ[5] च स्रजं
चाञ्जनं चादर्शोपानहौ[6] दण्डं च छत्रं चाथ नक्षत्राणि
तिष्य[7] उत्तरे फल्गुनी हस्तश्चित्रा[8] स्वाति विशाखे
15 इत्येतेषामेकस्मिन्पुरोदयादादित्यस्य व्रजं प्रपद्यत 'एतद-
हःस्नातानां[9] ह वा एष एतत्तेजसा[10] तपति ' तस्मा-

---

1) Thus N, G *pitṛbhya svadhā nama*, see p 49 note 7 2) G *etāmupahomām ju°*, N उपहोमाञ्जु° 3) Thus N Bh, G *māsiśrāddham* 4) Thus N Bh, G *palāśam* 5) Thus N, G *prāvṛttau* 6) Thus G N 7) G *taṣya*, N तिष्य, see HG I 9 3 8) G N *hasta citrā* 9) MSS om the visarga 10) N om एतत्

देनमेतदहर्नाभितपेदन्तर्लोम्ना चर्मणा द्वारमपिधाय पूर्वार्धे
व्रजस्याग्निमुपसमाधाय मध्यंदिने पालाशीं समिधमादधातीमं
स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया[1] ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं
तव स्वाहेति ' तत एतान्संभारान्सकृदेव सर्वानाहृत्य 5
तानुत्तरतो ऽग्नेर्निधायापरेणाग्निमुत्तरतःपरिषेवनामेरका-
मास्तीर्य तस्यामुदक्शिरा निपद्यते ' ॥ १८ ॥

दक्षिणतो नापित उपविशति । तस्य क्षुरमभिमन्त्रयते
शिवो नामासि स्वधितिस्ते पिता । नमस्ते अस्तु मा मा
हिंसीरित्यद्भिरुध्यमानमभिमन्त्रयते शिवा मे भवथ संस्पृश 10
इति '[2] क्षुरमभिनिधीयमानमभिमन्त्रयते यदृषीणां त्र्यायुषं
जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे
अस्तु त्र्यायुषमिति 'वपन्तं यत्क्षुरेण मर्चयता सुपेशसा[3]
वप्त्रा[4] 'वपसि वर्चसा मुखं मा न[5] आयुः प्रमोषीरिति '
श्मश्रूणि वापयित्वोपपक्षौ निवापयते ऽथ केशान्यथोपपा- 15
दमङ्गान्येवमेवात[6] ऊर्ध्वं वापयते ' पश्चार्धे व्रजस्योपवि-
श्य[7] मेखलां विस्रस्य परिकर्मिणे प्रयच्छतीमां हृत्वा

---

1) Thus N, G *mantṛā*  2) N ins ग्न  3) Thus N, G *sampaśasā*
4) Thus G, N वप्ता, see HG I 9 16, AV VIII 2 17  5) G *nu*, N न
6) G N Bh °*yathopapātam*°  7) Thus N Bh, G *praśasya*

स्तान्व उपगूहेति ' तां स हृत्वा स्तान्व उपगूहतीदमहम-
मुष्यामुष्यायणस्य द्विषन्तं भ्रातृव्यमुपगूहाम्युत्तरो ऽसौ
द्विषद्भ्य इति ' तत आप उपशेरत उष्णाश्च शीताश्च '
शीतासूष्णा आनयति दैवमानुषस्य व्यावृत्या इति विज्ञा-
यते ' संसृष्टाभिरद्भिरभिषिञ्चत्यापो हि ष्ठा मयोभुव इति
तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः
पवमानः सुवर्जन इत्येतेनानुवाकेन ' स्नानीयेन प्रता-
प्य[1] ॥ १९ ॥

दन्तान्प्रक्षालयते ऽन्नाद्याय व्यूहध्वं सोमो राजेदमाग-
मत्[2] । स मा प्रविशत्वन्नाद्येन भगेन च दीर्घायुरहमन्नादो
भूयासमिति ' सार्वसुरभिणा प्रलेप्स्यमानः[3] प्रोक्षति नमः
शाकजञ्जभाभ्यां[4] नमस्ताभ्यो देवताभ्यो या[5] अभिग्रा-
हिणीरित्यथानुलिम्पेद्यद्वर्चो[5] अप्सरासु च गन्धर्वेषु च
यद्यशः । दिव्यो यो मानुषो गन्धश्च[6] स[7] माविशता-
दिहेति ' समुन्नीय चन्दनेनानुलेप्स्यमान एवं प्रोक्षत्येवम-
नुलिम्पेदथाहतमन्तरं[8] परिधत्त आयुरसीति ' जरामशी-
येत्युत्तरं ' यज्ञोपवीतं कृत्वाप आचम्य जयाभ्यातानान्राष्ट्रभृत

---

1) Thus G Bh, N प्रतीप्य  2) Thus N, G *rājetham°*  3) Thus Bh G *pralepsamānah*, N corr  4) Thus G, N शाकजञ्जभ्याभ्या, Bh *śākajañjapabhyām*  5) G om *yā*, N यभिग्रा°  6) Read गन्ध  7) Thus N G *sā*  8) Thus N, G *°anulimpetathātam°*

इति हुत्वैता[1] आहुतीर्जुहोति[1] दीक्षा तपो मनसो[2] मातरिश्वा बृहस्पतिर्वाचो अस्याः स योनिः । वेदांसि[3] विद्या मयि सन्तु चारवो[4] ऽग्निषोमा यशो अस्मासु धत्तम् ॥ अग्निर्येन विराजति सोमो येन विराजति सूर्यो येन विराजति विराजेन[5] विराजति तेनाहं विश्वतः परिविराज्यासमिद्धैकवृत्स्वाहेति[6]' ॥ २० ॥

अपरेणाग्निं प्राङ्मुख उपविश्य[7] सोपधानं मणिं प्रवयति 'सपाशं बादरं मणिमुदपात्रे ऽवधाय प्रदक्षिणं पर्याप्लावयतीयमोषधे[8] त्रायमाणा सहमाना सहस्वती सा मा हिरण्यवर्चसं ब्रह्मवर्चसिनं मा करोत्वित्युद्धृत्याक्ष्णयैव[9] पर्याहृत्य प्रतिमुञ्चते[10] ऽपाशो ऽसीत्युरसि स्थापयत्युरो मे मा संशारीः शिवो मोपशेष्व मह्यं दीर्घायुत्वाय शतशारदायेति' हस्तेन बादरं मणिमूर्गसीत्यर्को मणिर्ब्राह्मणस्य पुलको वैश्यस्य राज्ञो गर्दभसुग्रीवो' ऽर्को मणिर्ब्राह्मणस्य वैश्यस्य पुलको मणिः । राज्ञो गर्दभसुग्रीवो

---

1) G *hutvāhutīr°* 2) N ins इति 3) Thus N, G *vedadasa* 4) G *carapo*, N चारु पो, see Āp Ś VI 23 1 5) Thus N, G *virām-yena* 6) G *parivirādyāsamiddhaitairhaitāha*, N परिविरा त्यासमिद्दैकताह्°, see Āp Ś VI 23 1 7) G ins *sūtram* 8) G *paryyāpūyati yamoṣadhe*, N पर्याप्लावयति यमौषधे, Bh *paryyāplāvayati yamoṣadhe*, see HG I 10 6 9) G *karoti uktadakṣiṇayaiva* N °त्युद्धृत्यात्रेपाद्दपर्येत्र, Bh *uddhṛtyākṣṇayaiva* 10) Thus N Bh, G *pramuñcate*

यस्य कस्य कपित्थक इति मणिधारणे गाथा[1] भवति' निधायाहतमन्तरं परिधत्त आयुषे त्वेति' जरामशीयेत्युत्तरमंहतस्य[2] दशायां[2] प्रवर्तौ[3] प्रवध्य[4] दर्व्यामाधायाज्यस्योपघातं जुहोत्यायुष्यं वर्चस्यं सुवीर्यं रायस्पोषमौद्भिद्यमिदं हिरण्यमायुषे वर्चसे जैत्रियायाविशतान्मां[5] स्वाहा ॥ उच्चैर्वाजि पृतनाजित्सत्रसाहं[6] धनंजयम् । सर्वाः समृद्धीर्ऋद्धयो[7] हिरण्ये ऽस्मिन्समाहिताः[8] स्वाहा ॥ शुनमहं[9] हिरण्यस्य पितुरिव नामाग्रभैषम्[10] । तं मा हिरण्यवर्चसं पुरुषु प्रियं कुरु स्वाहा ॥ प्रियं मा देवेषु कुरु प्रियं मा ब्राह्मणे[11] कुरु । प्रियं विश्येषु शूद्रेषु[12] प्रियं राजसु मा कुरु स्वाहा ॥ संराजं च स्वराजं चाभिष्टीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा संसृजामसि स्वाहेति' ॥ २१ ॥

उद्धृत्य प्रक्षाल्य दक्षिणमेवाग्रे प्रतिमुञ्चत आयुष्यं वर्चस्यमित्येतदेव[13] मणिकुण्डलबन्धने विद्यादेवं स्रजं

---

1) G Bh *gūdhā*, N --धौ  2) G °*ahatasyāśāyu*, N °त्तर् हत सा दशाया, Bh *uttarīyadaśayām*  3) Thus N, G Bh *pravṛttau*  4) G Bh *prabuddhya*, N corr  5) G *jaitriyāyāmisatum*, N जैत्रायाविशता मा  6) G *pṛtanājistrāsāhan*, N पृत नासाह सभासाह, see HG I 10 6, Āp MB II 8 2, RVKh X 128 3.  7) G N *samṛddhi ṛddhayo*  8) G om the visarga, N समा भृता  9) G *śūnam°*  10) Thus G, N °ग्रहैषम्  11) Thus N, G *brahmaṇā*  12) Thus N, G *rudreṣu*, see HG I 10 6, Āp MB II 8 4  13) Thus N Bh, G °*etayaiva*

. . ‿ - . पुभिके शिर आरोह शोभयन्ती मुखं मम । मुखं हि मम शोभय भूयांसं च भगं कुरु ॥ यामाहर-ज्जमदग्निः श्रद्धायै कामायान्यै[1] । इमां तां[2] प्रतिमुञ्चे ऽहं भगेन सह वर्चसेत्यंथाङ्गे[3] यदाञ्जनं त्रैककुदं जातं हिमवत उपरि[4] मयि[4] पर्वतवर्चसमित्यादर्शमवेक्षते यन्मे वर्चः 5 परापतितमात्मानं परिपश्यतः । इदं तत्पुनराददे भगेन सह वर्चसेति' वाग्यत आस्त[5] आ[5] नक्षत्राणामुदया-दुदितेषु[6] नक्षत्रेषूपानहावुपमुञ्चते[7] द्यौरसीति दक्षिणां[8] पृथिव्यसीत्युत्तरामुपमुच्याभिमन्त्रयते[9] प्रतिष्ठे स्थो देवते[10] मा मा संतापमिति' दण्डमादत्ते लोके[11] वेदायास्मि[12] 10 द्विषतो वधाय सपत्नाञ्छ्वापदान्सरीसृपान्हस्तिनश्चेति[13]' छत्रमादत्ते प्रजापतेः शरणमसि ब्रह्मणः छदिरित्युपनि-ष्क्रम्य दिशो ऽनुवीक्षते देवीः[14] षडुर्वीरुरु[15] नः कृणो-तेति' चन्द्रमसमुदीक्षते मा रधाम द्विषते सोम राजन्निति' यत्रास्य रात्रिर्भवति तेन संभाष्य यथार्थमेतीत्येकमेतद- 15

---

1) Thus N, G *kāmādhinyai* 2) Thus N, G *tāham* 3) G *°athāhīte*, N °थाङ्गे 4) Thus N, G *uparayi* 5) Thus N, G *āstā* 6) Thus N, G *°upadayād°* 7) After नक्षत्रेषु N ins उपनिष्क्रम्य 8) Thus Bh, G N *dakṣinam* 9) G N Bh *°abhimucyā°* 10) G ins *mā mā dābhyam* 11) Thus G Bh, N om 12) Thus G, N वेधागम 13) G *sapatnāñchāpa°*, N सपत्नाच्छाप° 14) N देवी, G Bh *daivīḥ* 15) Thus N, G *ṣadurvī āvaru*

परं 'तूष्णीमिव तीर्थे स्नात्वोदित्य तूष्णीं पालाशीं समिधमादधाति[1]' संवत्सरं न मैथुनं चरति द्वादशरात्रं त्रिरात्रं वा सर्वा[2] स्थितयः[2]' ॥ २२ ॥

अथार्घ्यं[3] 'विष्टरं पाद्यमर्घ्यं[4] वेदयते विष्टरमिति' कुर्वीतेत्याह 'कंसे दध्यानीय मध्वानयति' वर्षीयस्यानीय वर्षीयसापिदधाति[5] 'पूर्वः कूर्चेन प्रतिपद्यते' ऽन्वङ्गान्येनान्वङ्घ्र्यर्घ्येणान्वङ्गाचमनीयेनान्वङ्मधुपर्केणानुसंव्रजत्यथास्मा आसनमिति वेदयते' तत्प्रतिमन्त्रयते[6] राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषमिति[7] राजा ब्राह्मणो वा' राष्ट्रभृदस्यधिपत्यासन्दी मा त्वद्योषमिति ग्रामणीः सेनानीर्वाथास्मै पाद्यमिति वेदयते' तत्प्रतिमन्त्रयत आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे । अस्मिन्कुले ब्रह्मवर्चस्यसानि मयि महो मयि यशो मयीन्द्रियं वीर्यम् । आ मा गन्यशसा वर्चसा संसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति' सव्यं पादं प्रतिगृह्य दक्षिणं प्रतिगृह्णीयाद्दक्षिणं राजा ग्रामणीः सेननीर्वा' ॥ २३ ॥

---

1) N ins इत्यपरं 2) Thus G Bh, N सर्वस्मिन्नगरं 3) Thus Bh, G *athān*, N अथार्घं 4) G ins *iti*, N द्वितीयनर्घ्यं 5) Thus N Bh, G *varṣiyasyā°* 6) From here unto आपः l 11 N om 7) G *tvavoṣam°*

अथास्मा अर्घ्यमिति[1] वेदयते ' तदेतेनैव प्रतिमन्त्र्य[2]
विराजो दोहो[3] ऽसि[3] विराजो दोहमशीय मयि दोहः
पद्यायै विराज इति प्रतिगृह्य निनयति समुद्रं वः
प्रहिणोमि स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं
मा परासेचि मत्पय इत्यथास्मा आचमनीयमिति वेद- 5
यत ' आचामत्यमृतोपस्तरणमसीत्याचान्तोदकायायास्मै म-
धुपर्क इति वेदयते ' तत्प्रतिमन्त्रयते[4] यन्मधुनो .मधव्यं
परममन्नाद्यं रूपं तेनाहं मधुनो मधव्येन परमेणान्नाद्येन
रूपेण परमो ऽन्नादो मधव्यो भूयासमिति ' प्रतिगृह्य प्रा-
श्नाति त्रय्यै विद्यायै यशो ऽसि यशसो यशो ऽसि ब्रह्मणो 10
दीप्तिरसि तं मा प्रियं प्रजानां कुर्वधिपतिं[5] पशूनामिति '
भूर्भुवः सुवरिति त्रिराचम्याथ रातये प्रयच्छति स्वयं वा
सर्वं प्राश्नात्यथास्मा आचमनीयमिति वेदयत ' आचामत्य-
मृतापिधानमसीत्याचान्तोदकायायास्मै गौरिति वेदयते '
तां प्रतिमन्त्रयते गौरस्यपहतपाप्माप पाप्मानं जहि पा- 15
प्मानं मम चामुष्य च जहि द्विषन्तं हनीया[6] मम द्विषं
कुरुतेति ' ॥ २४ ॥

---

1) Thus G Bh, N घर्व°  2) N ins प्रतिगृह्णाति  3) Thus N Bh, G *dohāsi*  4) G om  5) Thus N, G *kurvanti paśum*  6) G *hatitha*, N जह्नो

अथास्मा अन्नं संस्कृत्य भूतमिति वेदयते ' तत आह
ब्राह्मणांश्चतुरो नानागोत्रान्भोजयतेति ' तेषु भुक्तवत्स्व-
न्नमाहरन्ति ' तदेतेनैव प्रतिमन्त्र्य प्रतिगृह्य[1] प्रत्यवरुह्य[2]
प्राश्नाति यथा[3] मधुपर्कं ' प्रत्यवरुह्यैवात ऊर्ध्वमन्नानि
5 प्राश्नीयादित्येकमथैतदपरमर्घ्येष्वेवैष नियमः[4] स्यादथा-
कामीतरेष्वथ यदि गामुत्सृजेत्तामभिमन्त्रयते गौर्धेनुभव्या[5]
माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य
नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामदितिं
वधिष्ट ॥ पिबतूदकं तृणान्यत्तु ॥ ओमुत्सृजतेत्यथ सोम-
10 प्रवाकाय ' यत्रास्मै सोमं प्राह तद्यज्ञोपवीतं कृत्वाप
आचम्य प्राङ्वोदङ्वा तिष्ठञ्जपत्यासीनो वा भूर्भुवः सुवरायुर्मे
प्रावोचो वर्चो मे प्रावोचो यशो मे प्रावोचः श्रियं मे
प्रावोच आयुष्मानहं वर्चस्वी यशस्वी श्रीमानपचिति-
मान्भूयासं[6] भूर्भुवः सुवः सर्वं भूयासमित्युक्त्वा प्रति
15 वाचष्टे प्रति वा जानीत ' एतेनैव भूतप्रवाकार्यो ' तन्मा
क्षायीत्यन्तेन[7] ' ॥ २५ ॥

अथास्मा अन्नं सनिमित्वाभिमन्त्रयते[8] ऽन्नमिव ते[9] दृशे[9]

---

1) Thus N Bh, G *pratihrsva* 2) Thus Bh, G *pratyaruhya*, N प्रत्यचह 3) Thus N Bh, G *yadā* 4) G Bh om the visarga, N corr 5) Thus G Bh, N °धेनुर्भव्या 6) G *śriyamān°* 7) G *kṣayi°*, N corr 8) Thus N, G *sannamitvā°*, Bh *sannamayitvā°* 9) G *tandrśe*, N तेऽदृशे

भूयासं वित्तमिव ते[1] दृशे[1] भूयासं श्रीरस्यर्वाच्याविशा-
स्मान्संस्रवतु[2] दिशो मह्वीः समागच्छन्तु सूनृताः। सर्वे
कामा अभियन्तु मा प्रिया अभिरक्षन्तु मा प्रियाः ॥ यशो
ऽसि यशो ऽहं त्वयि भूयासमसावित्यभिमन्त्र्यार्य[3] ब्रुवते'
व्यवजिहीर्षमाणः पण्यस्यावदाय[4] जुहोति यदहं धनेन 5
प्रपणं[5] चरामि धनेन देवा धनमिच्छमानः[6]। तस्मि-
न्सोमो रुचमादधात्वग्निरीशान इन्द्रो बृहस्पतिश्च स्वा-
हेत्येवं संवादजयनं[7] 'संवादमेष्यन्नात्तछत्रः सव्येन हस्तेन
छत्रं[8] समावृत्य[9] दक्षिणेन फलीकरणमुष्टिं जुहोत्यव-
जिह्वक निजिह्वकाव त्वा हविषा यजे। तत्सत्यं यदहं 10
वदाम्यधरो[10] मदसौ[11] वदात्स्वाहेति 'येन संवदते तम-
भिमन्त्रयत[12] आ ते वाचमास्यां[13] दद[13] आ मनस्यां
हृदयादधि[14]। अङ्गादङ्गात्ते वाचमाददे यत्र यत्र ते वाङ्
निहिता तां त आददे। तत्सत्यं यदहं वदाम्यधरो मत्प-
द्यस्वासाविति[15]' ॥ २६ ॥ 15

1) Thus G, N तेनसे 2) Thus emended, G *śrırasarvācyāvıdıśāsmāt°*, N श्रीरस्येवाच्याविशासमात° 3) G om *asāv* 4) Thus N Bh, G *punyasyā°* 5) G N *pramrnam*, see Āp MB II 22. 4 6) G *°ıchśamāh*, N °इमाना 7) Thus N, G *samvādajayınas*, Bh *samvādajayam* 8) Thus Bh, G *citram*, N छुत्र 9) Thus G Bh, N समावृत्य 10) Thus N Bh, G *°atharo* 11) N om मद्, G *°asā* 12) Thus N Bh, G *tad°* 13) Thus Mss, read probably वाचमास्याद् दद 14) Thus G, N हृदयदधिता 15) Thus N, G *°padyasvāhā*

यद्यस्मै सुभृत्याः[1] प्रव्रजेयुरग्निमुपसमाधायेङ्वानि[2]
जुहुयादनु पो[3] ऽह्वदनुह्वयो निवृत्तो वो न्यवीवृतत्[4]।
ऐन्द्रः परिक्रोशो वः परिक्रोशतु सर्वतः ॥ यदि मा-
मतिमन्यध्वमदेवा[5] देववत्तरम् । इन्द्रः पाशेन सित्वा[6]
5 वो[7] मह्यमित्पुनरानयादिति[7] वदेद्वा' खादिरं शङ्कुं
निहत्य नीललोहिताभ्यां सूत्राभ्यामपसव्यैस्त्रिः परिवे-
ष्टयेदावर्तन वर्तयेत्यपि वै यदि दूरगा भवन्तीह हैव
वर्तन्ते' यं कामयेत[8] नायं मत्पद्येतेति[9] दक्षिणे पाणा-
वभिपद्येत यस्मिन्भूतं च भव्यं च विश्वे देवाः समाहि-
10 ताः । तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं ब्रह्मणा
त्वा गृह्णामीति' न हैवास्मात्पद्यते[10]' यं कामयेत नायं[11]
मच्छिद्येतेत्यमावास्यां[11] रात्रिं सुप्तं[12] जीवविषाणे स्वं
मूत्रमानीयापसव्यैस्त्रिः परिषिञ्चन्परीयात्परि त्वा गिरेर-
मिहं[13] परि भ्रातुः परि ष्वसुः । परि सर्वेभ्यो ज्ञातिभ्यः

---

1) Thus N Bh, G *suhrtyāh* 2) Bh °*dhāyayenvānı*, G °*dhāya yanvagnın*, N °धायेत्वानि 3) Thus G N Bh, read वो 4) G *nyamīmrjat*, N corr , see Āp M B II 22. 9 5) G °*manyaddhvandeıā*, N °मन्यदेवा 6) G *sıktvā*, N शित्का, see PG III 7 3, Āp MB II 22 10, *HG I 14 4* 7) *G vo vahyamıtı punarāyād°*, N क्षेम-त्पुनराया इति 8) Thus N Bh, G *kāmata* 9) Thus Bh, G °*padyedetı*, N °पद्यातेति 10) Thus Bh, G °*padyante*, N corr 11) Thus Bh, G °*avāvāsyām*, N नापच्छिद्येति तमसावास्या 12) Thus Bh, G *suptān*, N सप्त 13) Thus Bh, G °*aharamıham*, N °रहमिद्, see Āp MB II 22 5

परिपीतः[1] ह्योष्यसि[1] ॥ शश्वत्परिकुपितेन संक्रामिणा-
वछिदा । उलेन परिमीढो[2] ऽसि परिमीढो[2] ऽस्युलेनेति'
न हैवास्मात्पद्यते' दीर्घसत्त्रमासिष्यमाणः[3] ॥ २७ ॥

प्रवासमेष्यन्भार्यायाः परिदां करोति' स्थूलाढारिका
ञीवचूर्णानि कारयित्वामावास्यायां रात्र्यां[4] सुप्तायामुपस्थं 5
प्रतिवपति सोमावास्य परिघमन्येभ्यः पुरुषेभ्यो ऽन्यत्र
मदिति' यद्यस्यां बहुतयापीच्छन्ति[5] न हैव सिध्यन्ति'
यदि कामयेत सिध्येयुरिति बभ्रुमूत्रेण प्रक्षालयस्वेत्येनां[6]
ब्रूयात्प्रवासमेष्यन्नामन्त्रयत इदं वत्स्यामः प्राणा आयुषि[7]
वत्स्याम इत्यथैनमभिमन्त्रयत[8] आ मन्द्रैरिन्द्र हरिभिर्याहि 10
मयूररोमभिः । मा त्वा के चिन्नियमुरिन्न पाशिनः। दधन्वेव
ता इहि[9] ॥ प्राण आयुषि वसासौ पृथिव्यामग्नौ प्रति-
तिष्ठ[10] वायावन्तरिक्षे सूर्ये दिवि यां स्वस्तिमग्निर्वायुः
सूर्यश्चन्द्रमा आपो ऽनुसंचरन्ति तां स्वस्तिमनुसंचरासौ ॥
प्रच्यवस्व भुवस्पत इति प्रतिपद्य श्येनो भूत्वा परापते- 15

---

1) G parītadam tvetyasi, N परिपीदमाऽेष्यसि 2) G parilīḍo, N corr 3) G Bh dīrghasūtram°, N दोर्घंसा°, see introd 4) Thus N Bh, G rātryām. 5) Thus G, N Bh bahutayā ’nechanti. 6) G prakṣālyasvainām, N प्रक्षालयस्वेत्येना, Bh prakṣālayetyenām 7) G om from here unto vasāsau l 12 8) Thus Bh, N °थैनाम° 9) N इति 10) Thus N, G pratitiṣṭhati

त्यत्तेन 'यं कामयेत स्वस्त्ययं पुनरागच्छेदिति[1] तमेतेन
त्र्यृचेनान्वीक्षेत[2] मह्नि त्रीणामवो[3] ऽस्त्वितीहैव[3] पुन-
रागच्छति 'यं कामयेत नायं पुनरागच्छेदिति तमन्वीक्षेत
साकं यक्ष्म प्रपतेत्येतयैनमभिमन्त्रयते[4] परमां त्वा परा-
5 वतमिन्द्रो नयतु वृत्रहा । यतो न पुनरायसि शाश्वती-
भ्यः[5] समाभ्य इति 'न हैव पुनरागच्छति ' ॥ २८ ॥

अथ रथारोहणं 'यदि रथं लभत आपूर्यमाणपक्षे पुण्ये
नक्षत्रे योजयित्वास्थास्यन्पक्षसी[6] अभिमृशति बृहदसीति[7]
दक्षिणं[8] रथंतरमसीत्युत्तरं[9] वामदेव्यमसीति[10] मध्यम-
10 मश्वमास्थाय[11] चक्रे संमार्ष्ट्यङ्कौ न्यङ्कावभित इत्यनुवाक-
शेषेण 'यदि शमरथो भवति तद्यज्ञोपवीतं कृत्वाप आ-
चम्य भूमिमभिमृशतीह धृतिरिह स्वधृतिरिह रन्तिरिह
रमतिरित्यथ हस्त्यारोहणं 'यदि हस्तिनं लभत-आपूर्य-
माणपक्षे पुण्ये नक्षत्रे कल्पयित्वाभ्युपविशतीदमहममुमामु-

---

1) Thus N Bh, G *purogachśed°* 2) G *ṛcanvī°*, N -नेत्रावी°, Bh *tryacenanvī°* 3) Thus N, G *tṛṇāmavostvihaiva*, Bh *°avarastu iti ihaiva* 4) Thus N Bh, G *prapadyatety°* 5) G *śaśvatibhyas*, N शाश्वतीस्, see TB III 3 11 3 6) Thus emended, G *yojayitvāsthāsyan°*, N जयित्वा पक्षसी 7) Thus N Bh, G om 8) Thus G Bh, N दक्षिणा 9) Thus Bh, G *°uttara*, N °त्युत्तरा 10) Thus N Bh, G *vāmevyamasati* 11) G ins *iti* between *aśvam* and *āsthāya*, N मध्यमास्थाय, Bh *madhyamam iti sammṛśet āsthāya*

व्यायणामिन्द्रस्य[1] वज्रेणाभिविशाम्युत्तरो[2] ऽहं द्विषद्भ्य[3]
इत्यथैनमभिक्रामयति[4] वह कालं वह श्रियं माभिव-
हेति[5]' समानं शमरथेन' यद्यनुपस्तीर्णे स्थण्डिल उप-
विशेत्तदनुमन्त्रयते नमः पृथिवीषदे रुद्राय वातेषवे रुद्राय
नमो रुद्राय[6] पृथिवीषद इति' सर्पसृतौ सृजति[7] नमः
सर्पसृते रुद्राय वातेषवे रुद्राय नमो रुद्राय सर्पसृत इति'
शकृद्गतौ[8] जपति नमः शकृत्सदे[9] रुद्राय वातेषवे
रुद्राय नमो रुद्राय शकृत्सद इति' यदि नवानि गोम-
यान्यन्तरातिक्रामेद्गोष्ठमसीत्युक्त्वातिक्रामेत्[10]' ॥ २९ ॥

यदि चतुष्पथं समया[11] व्रजेत्तदनुमन्त्रयते[11] नमः
पृथिवीषदे रुद्राय वातेषवे रुद्राय नमो रुद्राय पृथिवीषद
इति' यदि श्मशानं समया व्रजेत्तदनुमन्त्रयते नमस्तत्सदे
रुद्राय वातेषवे रुद्राय नमो रुद्राय तत्सद इति' नदी-
मुदन्वतीं दृष्ट्वा जपति नमो ऽप्सुषदे रुद्राय वातेषवे
रुद्राय नमो रुद्रायाप्सुषद इति' यद्येनं संवर्तवात आ-

---

1) Thus Bh, G *°ahamamuṣyāmuṣyāyanam°*, N °हमुमामुष्यायणा°
2) G *yajñenā°*, N °णाभ्युपविशाम्यु° 3) G *dviṣak*, N द्विषड्भ्य
4) Thus G Bh, N °मतिक्रमयति 5) Thus N, G *vānivahetı*
6) G om from here unto शकृत्सद l 8 7) Thus N alone, read probably जपति 8) Thus emended, N शकृद्रुतौ, Bh *śakṛdatau*, see Āp G 9 3 9) N जपेतत्सदे 10) Thus emended, G *°antarātrih kāmet°*, N °न्तरायतिक्रमे° 11) Thus N, G *samayādyajet°*

गच्छेत्तदनुमन्त्रयते नमो ऽन्तरिक्षसदे[1] रुद्राय[1] वातेषवे रुद्राय नमो रुद्रायान्तरिक्षसद इति 'यद्येनं सिचोपसृजे-त्तदनुमन्त्रयते[2] सिगसि न सिगसि वज्रो नमस्ते ग्रस्तु मा मा हिंसीरित्यद्भिरभ्युक्षेद्यद्येनं वयो[3] ऽभिविक्षिपेत्त-
5 दनुमन्त्रयते[4] ये पक्षिणः प्रथयन्ति विभ्यतो[5] निर्ऋतिः[5] सह । ते मा शिवेन तिग्मेन[6] तेजसोन्दन्तु वर्चसेत्यद्भि-रभ्युक्षेद्यद्येनं फलमभिनिपतेत्तदनुमन्त्रयते यदि वृक्षादभ्य-पतत्फलं[7] यद्यन्तरिक्षात्तदु वायुरेव । यत्रास्पृक्षत्तनुवं[8] यत्र वास ग्रापो बाधन्तां[9] निर्ऋतिं पराचीरित्यद्भिरभ्यु-
10 क्षेद्यद्येनमवर्षे[10][11] प्रुषितमववर्षेत्तदनुमन्त्रयते[11] दिवो नु मा वृहतो ग्रन्तरिक्षादपां स्तोको ग्रभ्यपतच्छिवेन[12] समिन्द्रियेण मनसाहमागां ब्रह्मणा[13] क्लृप्तः[13] सुकृतेने-त्यद्भिरभ्युक्षेत्[14]' ॥ ३० ॥

---

1) Thus N, G *rudrāyāntarikṣasade* 2) G °*pasrjeta tad*°, N सिचोपसर्त्तेत्तद° 3) Thus Bh, G *vāyo*, N वयासि 4) Thus Bh, G *ihvikṣipet*°, N क्षिक्षिपेतद° 5) Thus G, N विभृतो निऋति 6) Thus G, N ग्राग्मेन, see HG I 16 5, Āp MB II 22. 12 7) G °*abhyapatphalam*, N °भ्यपत--- 8) G *adhastātvṛkṣat*°, N यतासृक्षतदनुव, see Ap MB II. 22 12, HG I 16 7, AV VI 124 2 9) G *bālantān*, N वाधता 10) Thus G, N पराचारद्भिर° 11) G om *avarṣe pruṣitam*, N °वर्षे पृषित, Bh *apavarṣe pruṣitam* 12) G *abhyupaptachśivena*, N ग्रभ्यपतत् शिवेन, see HG I 16 6, Āp MB II 22 13, AV VI 124 1 13) G *brahmaklptas*, N ब्रह्मणा विन्न 14) Thus G, N सुकृतेत्यभिरवोक्षेत्

चित्र्यं वनस्पतिं दृष्ट्वा जपत्यारात्ते अग्निर्ज्वलत्वारात्प-
रशुरस्तु[1] ते । निवाते त्वाभिवर्षतु जीव वर्षसहस्रं त्वम् ।
नमस्ते ऽस्तु वनस्पते स्वस्ति मे ऽस्तु वनस्पत इति
प्राग्मध्यंदिनात्क्षीरिणो वृक्षाननुपस्पृशेन्नित्यं न्यग्रोधं च
सर्वत्र[2] स्वयंप्रज्वलिते ऽग्नौ समिधावादध्यादुद्दीप्यस्व जा- 5
तवेदो ऽपघ्नन्निर्ऋतिं मम । पशूंश्च मह्यमावह जीवनं च
दिशो दिशः[3] स्वाहा ॥ मा नो हिंसीज्जातवेदो गामश्वं
पुरुषं पशुम् । अहिंसन्न[4] आगहि श्रियं मयि परिपालय
स्वाहेत्याधायोपतिष्ठते नमो अग्निपदे रुद्राय वातिपदे
रुद्राय नमो रुद्रायाग्निपद इत्यनुभवं[5] परिभवं[5] परिवादं 10
परिक्षवम्[6]। दुःस्वप्नं दुरुदितं[7] शकुनेस्तद्विपक्ष्यो दिशा-
म्यहम् ॥ अनुभूतं परिभूतं शकुनेर्यदशाकुनम्[8]। मृगस्य
सृतमक्ष्णया[9] तद्विपक्ष्यो दिशाम्यहम् ॥ परेणैतु पापश-
कुनिः परेणैतु परिक्षवः[10] । अक्षिस्पन्दो[11] दुःस्वप्न[11]
दृष्टिरसंपन्नो[11] नो देहि तन्मृच्छत्वित्येतं मन्त्रं जपत्युपवाध 15

---

1) G °jvalitu°, N ज्वलितु° 2) Thus G Ph, N सर्वं 3) MSS om. the visarga 4) G ahinnagna N अहि नग 5) Thus G N, Ph anubhavam paribhavam 6) Thus G, N परिक्षव 7) G duritam, N दुरुदितं, see AV XIX 8 4 from here unto मृगस्य l. 12 N has only दुरुदितं दु शकुनं 8) G °ašākunam 9) G °ekṣṇam°, N मृगस्य° 10) G parikṣavaḥ, N परिक्षव 11) Thus emended, G °dusvapnaharṣṭi-rasampannaḥ°, N अक्षिस्पन्दो दुःस्व देहि°

उपबाधे च यथालिङ्गं 'सर्वत्रैवाप[1] उपस्पृशेत्' ॥ ३१ ॥

अथैतान्यद्भुतप्रायश्चित्तानि[2] भवन्ति 'कुम्भं कपोत उपा-
वेक्षीन्मध्यागार उपविक्षीत्स्थूणा व्यरौक्षीद्वल्मीक उदेति'
सो ऽहःक्षान्तः[3] प्रयतवस्त्रो ब्राह्मणसंभाषो ऽस्तमित
5 आदित्ये ऽन्तरागारे ऽग्निमुपसमाधाय[4] जयाभ्यातानाराष्ट्र-
भृत इति हुत्वैता आहुतीर्जुहोति पूर्णा पश्चादिमं मे
वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने
अयास्ययाश्चाग्ने ऽस्यनभिशस्तीश्च यदस्य कर्मणो ऽत्यरीरिचं
प्रजापत इत्युत्तमां हुत्वा ब्राह्मणानन्नेन परिवेषयेद्दध्येव
10 पयसि स्थालीपाकः[5] पौत्र्यः पशव्यः[6] स्वर्ग्य आयुष्यः[6]
स्वयंभोज्यस्तेन यजेत सर्वेषु पर्वस्वौदुम्बरमिध्ममभ्याधा-
यौदुम्बर्या दर्व्योपस्तीर्णाभिघारितं स्थालीपाकं जुहोति
सहस्रमेतु प्रथमं बभ्रूय[7] यशसा सह । आगत्य बभ्रुः
पिङ्गाक्षः सहस्रेणावकाङ्क्षतु[8] स्वाहा ॥ दिशो दिशो जा-
15 तवेदो मह्यं जीवनमावह । पशूनां विश्वरूपाणां यथाहं
सुमतौ वसानि स्वाहा ॥ देवानां संभृतो रसः प्राजापत्यं

---

1) Thus G, N Bh *sarvatrāpa* 2) G °*abhyudayaprāyaś*°, N °द्भुत°, Bh °*atbhutaya*° 3) G *haksatah*, N हस्तां त , Bh *ahah ksātah*, see HG I 14 2, 17 6 4) From here unto ब्राह्मणान्° l 9 G abbreviates 5) Thus N, G °*pāham* 6) G om the visarga 7) Thus G, N प्रभु 8) Thus G, N सहस्रेणाभिकाङ्क्षतु

यशो भवतु । जुहोम्यन्नानां रसमह्निा कीर्तिरस्तु मे स्वाहा ॥ अग्नावग्निश्चरति[1] प्रविष्ट ऋषीणां पुत्रो अधिराजा एषः[2] । स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्मभागधेयम्[3] । मो[3] अस्माकं[3] मोमुहद्भागधेयं[4] स्वाहेति ' यथोपदेशं काम्यानि बलयश्च ' ॥ ३२ ॥ 5

इति भारद्वाजसूत्रे द्वितीयः प्रश्नः ॥

---

एकाग्निर्द्वादशाहं विच्छिन्नः पुनराधेयः ' स[5] एष[6] औपनायनिको[7] ऽग्निरुतास्तस्य[7] परिचर्या[8] समिद्भिर्ब्रह्मचर्ये[8] सायं प्रातर्यथोपदेशं ' स्नात ओषधीभिर्यथोपपन्नेन वान्नेन[9] ' स्त्री चैवं भर्तरि प्रमीते पाणिग्रहणादूर्ध्वं ' पा- 10 र्वणः पौर्णमास्याममावास्यायां[10] वा रोहिण्यां मृगशिरसि पुनर्वस्वोर्वा मध्यंदिन[11] आदधीतोद्धते[11] ज्योतिते सिकतोप्ते[12] परिश्रिते निदधाति ' याज्ञिकात्काष्ठादग्निं[13]

---

1) G om from here unto मिथुया l 4  2) N एव , see AV IV 39 9, TS I 3 7 2, TB II 7 15 1 etc  3) G om , N om मा  4) G *momukhat°*, N मासुद°  5) G om  6) Thus G Bh, N एव  7) Thus Bh, G *aupāsanāyaniko°*, N पौरसायनिरंतग्नि°  8) Thus N Bh, G *paricaryyānyamiǒhir°*  9) N om वा , G Bh ins. *ca* behind *annena*  10) Thus Bh, G *paurnamāsyamamāvāsyāyām*, N पौर्णमास्याममावास्यायां  11) Thus Bh, G *maddhyandine mādadhita uddhate*, N मध्यंदिने मादद्दी°  12) Thus Bh, G *sikateposte*, N सिकतापोप्ते , Pr *sikatevopte*  13) Thus Pr, G Bh *yājñīyāt°*, N याज्ञिया°

मथित्वा लौकिकं वाहृत्य प्रणवेनाहरति[1] ' ब्रह्मा प्रणवेन प्रसौत्यासीनो[2] व्याहृतीभिः प्रणवेनादधाति[3] भूर्भुवः सुवरों पृथिव्यां त्वामृत आदधामि सत्ये त्वामृत आदधाम्यृते[4] त्वामृत आदधाम्यमृते त्वामृत आदधामि[5] विहाय[5]
5 दौष्कृत्यं[5] साधुकृत्यमिति[5] ' तत एतैः पृथिव्यां[6] त्वामृत आदधामि सत्ये त्वामृत आदधाम्यृते[7] त्वामृत[7] आदधाम्यमृते[7] त्वामृत[7] आदधामीत्याज्येन चौषधीभिश्च शमनीयाभिरृक्तीभिस्तिसृभिः शमयति या ते अग्ने पवमाना[8] पशुषु[8] प्रिया तनूर्या पृथिव्यां याग्नौ या रथंतरे या गायत्रे
10 छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा ॥ या ते अग्ने पावकाप्सु प्रिया तनूर्यान्तरिक्षे या वायौ या वामदेव्ये या त्रैष्टुभे छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा ॥ या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि यादित्ये या बृहति या जागते छन्दसीदं ते तामवरुन्धे तस्यै ते स्वा-
15 हेति ' तिस्र आश्वत्थीः[9] समिधो घृतान्वक्ता आदधात्यग्न

---

1) Thus G Bh, N °दधाति instead of °हरति 2) Thus Bh, G N *prasūty°* 3) Thus N Bh, G *praṇavena cādadhāti* 4) Thus N, G *ādadhāmi te*, Pr *ādadhāmi jane* 5) G °*dhāmīti vihāya dauṣkṛtyam sādhukṛtyam*, N °धामि हायद्येषे मृत्य साधुकृत्य° 6) G abbreviates 7) N om 8) Thus G Bh Pr, N पशुषु पवमाना, see Āp Ś V 16. 4 9) MSS om the visarga.

आयूंषि पवस[1] इति[1] तिसृभिः ' समुद्रादूर्मिर्मधुमाꣳ[2] उदारदिति[2] तिस्रः शमीमयीः[3] ' प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरी[4] ' विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं ' तां सवितुर्वरेण्यस्य चित्रामिति शमीमयी ' ततस्तूष्णीमौपासनं हुत्वा यास्ते अग्ने घोरास्तनुवः स्निक्ष 5 स्नीहितिश्चेत्येताभ्यामनुवाकाभ्यामुपस्थाय समानं[5] दार्विहोमिका परिचेष्टा ' दार्विहोमिकां परिचेष्टां कृत्वा ॥ १ ॥

आज्यमधिश्रित्योत्पूय स्रुवं च जुहूं च निष्टप्य संमृज्य चतुर्गृहीतेन स्रुचं पूरयित्वा द्वादशगृहीतेन वा पूर्णाहुतिं जुहोति ' सप्त ते अग्ने समिधः सप्त जिह्वा इत्येतामनुद्रुत्य[6] 10 स्वाहाकारेण जुहोति ' हुतायां पूर्णाहुतौ वरं ददाति धेनुं वासो ऽनड्वाहं हिरण्यं वा ' स्रुचि[7] चतुर्गृहीतं गृहीत्वा तिस्रस्तन्तुमतीर्जुहोति तन्तुं तन्वन्नुद्बुध्यस्वाग्ने[8] त्रयस्त्रिंशत्तन्तव इत्यपरं चतुर्गृहीतं गृहीत्वा चतस्रो ऽभ्यावर्तिनीर्जुहोत्यग्ने ऽभ्यावर्तिन्नग्ने[9] अङ्गिरः पुनरूर्जा सह 15 रय्येत्यपरं चतुर्गृहीतं गृहीत्वानुख्यां जुहोत्यन्वग्निरुषसा- .

---

1) Thus N, G *pavaseti* 2) G °*madhumām udīra iti*, Pr °*madhumām udīrad*, N °मधुमांरीति 3) Thus N, G *śamīmayīm* 4) Thus G, N °दुम्बरे 5) Thus G; N Bh *samānamā* 6) Thus N Bh, G om. *etām* 7) Thus Bh, G *sruc*, N om., Pr *punaś* 8) Thus Pr, G N °*āgnes* 9) Thus N Pr, G °*bhyāvartin agne*

मग्रमख्यदित्येतयापरं[1] चतुर्गृहीतं गृहीत्वा मनस्वत्या
जुहोति मनो ज्योतिर्जुषतामित्येतयापरं चतुर्गृहीतं गृ-
हीत्वा प्राजापत्या जुहोति प्रजापतय इत्येतयापरं चतु-
र्गृहीतं गृहीत्वा व्याहृतीभिर्जुहोत्येकैकशः समस्ताभिश्च'
5 प्रत्येकं चतुर्गृहीतं[2] जुहुयादित्येके' यथा समादिष्टमित्य-
परं' यथाकामी सर्वदर्विहोमेषु' जयाभ्यातानान्राष्ट्रभृत
इति हुत्वा ॥ २ ॥

एतस्मिन्नेवाग्नावोदनं श्रपयित्वा चतस्रो ऽन्नाहुतीर्जुहो-
त्यग्नये स्वाहाग्नये पवमानाय स्वाहाग्नये पावकाय स्वा-
10 हाग्नये शुचये स्वाहेति' नवेन च सस्ये सस्ये' तत्रेमाभ्य
आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्विष्टकृत्पञ्चमीभ्यो
वा जुहोतीन्द्राग्निभ्यां स्वाहा विश्वेभ्यो देवेभ्यः[3] स्वाहा
सोमाय स्वाहा द्यावापृथिवीभ्यां स्वाहाग्नये स्विष्टकृते
स्वाहेति' पुरस्तात्स्विष्टकृत उपहोमं जुहोति शतायुधाय
15 शतवीर्यायेति पञ्च' ततो ब्राह्मणान्भोजयेद्यावज्जीवमे-
तमग्निं व्रीहिभिर्यवैर्वा सायं प्रातः परिचरत्यग्नये[4] स्वा-
हेति सायं पूर्वामाहुतिं जुहोति प्रजापतये स्वाहेत्युत्तरां'
सूर्याय स्वाहेति प्रातः प्रजापतये स्वाहेत्युत्तरामथ यदि

---

1) Thus N Pr, G *°akhyatyetayabaran* 2) Thus Bh, G N *catur-grhitair* 3) Thus N Bh, G *devatabhya* 4) Thus N Bh, G *paricaratv°*

प्रयियासेत्प्रवसथकल्पो व्याख्यातः' समित्समारोपणोपा-
वरोहणमात्मन्यरण्योर्वा [1] 'समित्समारोपणमेके समामन-
न्ति लौकिके चोपावरोहणं ' व्याख्यातमेकाग्निविधानं '
संतिष्ठत ग्रौपासनकल्पः संतिष्ठत ग्रौपासनकल्पः ' ॥ ३ ॥

ग्रथातो व्रतादेशविसर्जने व्याख्यास्यामः ' पर्वण्युदग- 5
यन ग्रापूर्यमाणपक्षे पुण्ये नक्षत्रे ग्ग्रेरुपसमाधानाद्याज्य-
भागान्ते होतृभ्यः स्वाहा प्रजापतये स्वाहा विश्वेभ्यो
देवेभ्यः स्वाहा स्वयंभुवे स्वाहेति होतृषु ' सांहितीभ्यो [2]
देवताभ्य उपनिषद्भ्यः स्वाहा वारुणीभ्यो देवताभ्य उप-
निषद्भ्यः स्वाहा सर्वाभ्यो [3] देवताभ्य उपनिषद्भ्यः स्वाहे- 10
त्युपनिषत्सु ' चतस्रः पालाशीः समिधो घृतान्वक्ता ग्रा-
दधाति याज्ञिकानां वा वृक्षाणामन्यतमस्याग्ने व्रतपते
होतृभ्यो व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा ॥
वायो व्रतपत [4] ग्रादित्य [4] व्रतपते व्रतानां व्रतपते
होतृभ्यो व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वा- 15
हेत्युपनिषत्सूपनिषद्भ्यो [5] व्रतं चरिष्यामि तच्छकेयं तन्मे
राध्यतां स्वाहेति ' चित्तं च चित्तिश्चेति जयादि प्रतिपद्यते '

1) G °*samārohanamupāvarohanam*°, N °समारोपणोपावरोहणात्वा°, Bh °*samāropanopāvarohane ātmany*° 2) Thus Bh, G *sāmhibhyo*, N साहितूभ्यो 3) Thus N, G *sarvebhyo* 4) Thus N, G °*patāditya*
5) G om from स्वाहेत्यु° unto स्वाहेति l 17

परिषिचनान्तं कृत्वाथैनं संशास्ति ब्रह्मचार्यसि समिध आधेह्यपो ऽशान कर्म कुरु मा दिवा सुषुप्था भिक्षाचर्यं चराचार्याधीनो वेदमधीष्वेति ॥ ४ ॥

चत्वारिंशतमष्टौ[1] चतुर्विंशतिरिव[2] वा सर्वदेव[3] ब्रह्मचर्यं ग्रहणान्तं वा वर्षाणि द्वादशावरार्ध्यमित्यपरं संवत्सरमेतद्व्रतं चरेत्संवत्सरे पर्यवेते ऽग्नेरुपसमाधाना-द्याज्यभागान्ते यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वे मिन्दाहुती जुहोति पूर्ववत्प्रधानाहुतीर्हुत्वा व्रतपति-भ्य[4] आधापयत्यग्ने व्रतपते होतृभ्यो व्रतमचारिषं तदशकं तन्मे ऽराधि स्वाहा ॥ वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते होतृभ्यो व्रतमचारिषं[5] तदशकं तन्मे ऽराधि स्वाहेत्युपनिषत्सूपनिषद्भ्यो[6] व्रतमचारिषं[5][6] तदशकं[6] तन्मे[6] ऽराधि[6] स्वाहेति चित्तं च चित्तिश्चेति जयादि प्रतिपद्यते परिषिचनान्तं कृत्वाथैनं व्रतान्ते ऽध्या-पयते श्रावयते वा महा[7] होतार[8] उपनिषद[8] इति

---

1) Thus Bh, G *catvarimśamaṣṭau*, N चत्वारिंशति सष्टौ

2) Thus G N Bh

3) Thus Bh, G *sarvadhava*, N सर्वेवेद

4) Thus N, G *pratipatibhya*

5) Thus G, N °चार्षं

6) G om, N ins this passage before स्वाहा वायो व्रतपत l 10, see, however, p 71 l 13—l 17

7) Thus G, N om

8) G *tara upanida*, N होतारोपनिषद, Bh *hotāra upanyad*

संतिष्ठते व्रतादेशविसर्जने संतिष्ठते[1] व्रतादेशविसर्ज-
ने[2]' ॥ ५ ॥

अथातो[3] ऽवान्तरदीक्षां व्याख्यास्यामः 'पर्वण्युदगयन
आपूर्यमाणपक्षे पुण्ये नक्षत्रे ऽपराह्णे केशश्मश्रू वापयित्वा
प्राचीमुदीचीं[4] वा दिशमुपनिष्क्रम्य[5] खिले[5] ऽछदि-
र्दर्शे[6] ऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववदुपाकृत्य मद-
न्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा चतस्र औदु-
म्बरीः समिधो घृतान्वक्ता आदधाति पृथिवी समिदित्ये-
तैर्मन्त्रैरथ देवता उपतिष्ठते ऽग्ने व्रतपते शुक्रियं व्रतं
चरिष्यामि तच्छकेयं तन्मे राध्यतां वायो व्रतपत आदित्य
व्रतपते व्रतानां व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं
तन्मे राध्यतामित्यथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्या-
हारयति प्रथमोत्तमयोर्वा[7]' त्र्यादि प्रतिपद्यते 'परिषेच-
नान्तं कृत्वा मदन्तीरुपस्पृश्योत्तमेनानुवाकेन शान्तिं कृत्वा
ततः संमीलयति वाचं च[8] यच्छत्यथास्याहतेन[9] वाससा
शिरः[10] संमुखं[10] वेष्टयत्यस्तमित आदित्ये ग्रामं प्रपा-

1) Thus G N, read संतिष्ठेते 2) G N ins *iti* 3) N om. khaṇḍika 6 and 7 4) Thus G, Bh *prācīm vodīcīm vā*, but cf p 75 l 17
5) G N Bh °*kramyākhile* 6) G *chadidéśe*, Bh *chadirdeśe*, see, however, Āp Ś XV. 20 2, BŚ IX 19 294 6, see also introd
7) G ins. *kṛtvā* 8) G om 9) Thus emended, G om *athāsyāha*, see introd 10) Thus Bh, G *śirasi mukham*

दयति ' वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा ' श्वो भूते खिले
ऽछदिर्दर्शे[1] ऽग्निमुपसमाधाय संपरिस्तीर्याथास्य षट्यमभि-
विदर्शयति[2] सप्ततयमित्येके ऽग्निमादित्यमुदकुम्भमश्मानं
वत्सं महानग्नीं हिरण्यं सप्तममपि वादितस्त्रीण्यभिविद-
5 र्शयति[3] ' तत आदित्यमुपतिष्ठते वयः सुपर्णा इत्येतया-
ऽत्रैतद्वासो गुरवे दत्त्वाथास्य ब्रह्मचर्यमधि नित्ये[4] ' न नक्तं
भुञ्जीत ' यदि भुञ्जीतापज्वलितं भुञ्जीत ' न मृन्मयं[5] प्रति
धयीत ' न स्त्रिया[6] न[6] शूद्रेण[6] सम्भाषेत ' न चक्री-
वन्तमारोहेन्न कूपमवरोहेन्नोपानहौ न छत्रं धारयीत '
10 न समाजमीक्षेत न कूर्म्याणि न शरीराणि न शवं ना-
न्तावसायिनम्[7] ' ॥ ६ ॥

संवत्सरमेतद्व्रतं चरेत्संवत्सरे पर्यवेते खिले ऽछदि-
र्दर्शे[8] ऽग्नेरुपसमाधानाद्याज्यभागान्ते द्वे मिन्दाहुती हुत्वा
पूर्ववत्प्रधानाहुतीर्जुहुयान्मंदतीरुपस्पृश्य[9] प्रथमेनानुवा-
15 केन शान्तिं कृत्वा तत आवृत्तैः पृथिवी समिदित्येतैर्मन्त्रि-
श्चतस्र औदुम्बरीः समिध आधायावृत्तैर्देवता उपतिष्ठते '

---

1) G Bh *chadırdeśe* 2) Thus Bh, G *abhıdarśayatı* 3) G °*darśatı*
4) G *tıythete*, Bh *nıtya*, but see Ap Ś XV 20. 11, 12, H Ś XXIV 15
5) Thus emended, G *mrnmam*
6) G *strıśūdrena*, see BŚ IX. 16 296 10, Āp Ś 1 c. 16
7) Thus Bh, G *nāntāvasāyıkam* 8) G Bh *chadırdeśe*
9) Thus Bh, G °*juhuyāmantīr*°

ऽथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति प्रथमो-
त्तमयोर्वोत्तमेन शान्तिं कृत्वा ऽथादि प्रतिपद्यते ' परिषे-
चनान्तं कृत्वाथैनं संशास्ति ब्रह्मचार्यसीत्याद्यन्तावसायि-
नमित्यन्तं[1] ' पूर्ववदादेशः ' ॥ ७ ॥

अथात उपाकरणविसर्जने व्याख्यास्यामः ' श्रवणापक्ष 5
ओषधीषु जातासु हस्तेन पौर्णमास्यां[2] वोपाकर्माग्निरु-
पसमाधानाद्याज्यभागान्ते काण्डर्षीञ्जुहोति काण्डनामानि
वा प्रजापतये काण्डर्षये स्वाहेति प्राजापत्यानां प्रजाप-
तये स्वाहेति वा सोमाय काण्डर्षये स्वाहेति सौम्यानां
सोमाय स्वाहेति वाग्नये काण्डर्षये स्वाहेत्याग्नेयानाम- 10
ग्नये[3] स्वाहेति वा विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहेति
वैश्वदेवानां विश्वेभ्यो देवेभ्यः स्वाहेति वा स्वयंभुवे
स्वाहेति ' सर्वेषां सदसस्पतिर्द्वितीयस्त्रीनादितो ऽनुवाका-
नधीयते[4] काण्डादीन्वा[5] सर्वांस्त्र्यहमेकाहं[5] वाजाम्ये-
तायाधीयीत ' मासं प्रदोषे नाधीयीत ' तैषीपक्षस्य रोहि- 15
ण्यां पौर्णमास्यां वोत्सर्गो ऽपि वा माघ्यां ' सहान्तेवासिभिः
प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य यत्रापः[6] सुखावगा-

1) G °antimasthanam° 2) Thus N Bh, G paurnamāsyām
3) G ins. kāndarṣaye 4) Thus MSS, read °धीते 5) Thus N,
G om. kāndādīnvā sarvān 6) Thus emended, G yatrāsūparvādhaka-
kāmyaḥ, N °सुपरवगा दा. वार्विग्नः, Bh yatrāpa svapagāhā°

ह्वा[1] अवकिन्यः[1] शंखिन्यस्तत्र गव्यायो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा[2] ॥ ८ ॥
अघमर्षणेन[3] त्रीन्प्राणायामान्धारयन्नृतं च सत्यं
5 चाभीद्धात्तपसो[4] ऽध्यजायत । ततो रात्रिरजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्ष-मथो सुवरिति दर्भानन्यो ऽन्यस्मै प्रदायायासनानि कल्प-
10 यन्ते ब्रह्मणे प्रजापतये ऽग्नये बृहस्पतये वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्य इन्द्राय राज्ञे सोमाय राज्ञे यमाय राज्ञे वरुणाय राज्ञे वैश्रवणाय राज्ञे रुद्राय स्कन्दाय विष्णवे ऽश्विभ्यां[5] धन्वन्तरये वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः साध्येभ्य ऋभुभ्यो भृगुभ्यो मरुद्भ्यो ऽथर्वभ्यो
15 ऽङ्गिरोभ्य इति गणानाम् ॥ ९ ॥
विश्वामित्राय जमदग्नये भरद्वाजाय गौतमायात्रये वसिष्ठाय कश्यपायारुन्धत्यै कल्पयामीति दक्षिणतो ऽगस्त्याय[1])

---

1) See note 6, p 75 2) Thus N Bh, G om 3) Thus Bh, G *aghamarṣaṇam*; N घम तर्षणेन 4) G abbreviates 5) Thus emended, G N *śvabhyān* 6) Thus N; G *gastyāyantyuttarataḥ*

कल्पयन्त्वुत्तरतः[1] कृष्णद्वैपायनाय जातूकर्णाय[2] तरुक्षाय[3] वृहदुक्थाय[4] तृणाविन्दवे सोमश्रवसे सोमशुष्मिणे वाजश्रवसे वाजरत्नाय वर्मिणे वरूथिने सनद्वते[5] दृर्यञ्चने वामदेवायोदमयायर्णंजयायर्तंजयाय[6] कृतंजयाय[7] धनंजयाय वभ्रवे त्र्यरुणाय त्रिवर्षाय[8] त्रिधातवे ऽब्ययज्ञाय[9] पराशराय वसिष्ठायेन्द्राय मृत्यवे कर्त्रे त्वष्ट्रे[10] धात्रे विधात्रे सवित्रे सुश्रवसे सत्यश्रवसे सावित्र्यै छन्दोभ्य ऋग्वेदाय यजुर्वेदाय सामवेदायाथर्वाङ्गिरोभ्य[11] इतिहासपुराणेभ्यः[12] सर्पदेवजनेभ्यः सर्वभूतेभ्यश्च कल्पयामीति' ॥ १० ॥

दक्षिणतः प्राचीनावीती वैशम्पायनाय फलिङ्गवे तित्तिरय[13] उखायात्रेयाय[13] पदकाराय[14] कौण्डिण्याय वृत्तिकाराय कण्वाय वौधायनाय भरद्वाजाय सूत्रकारायापस्तम्बाय[15] सर्वेभ्यः सूत्रकारेभ्य आचार्येभ्य ऋषिभ्यो वानप्रस्थेभ्य ऊर्ध्वरेतोभ्य[16] एकपत्नीभ्यश्च[17] कल्पया-

---

1) See note 6, p 76 2) G *ṛtukarṇāya*, N जातूकर्णाय; see HG II. 19 6 3) Thus N, G *rukṣāya* 4) G °*utthāya*, N °दुक्षाय 5) G *sananmate*, N सन्वते 6) Thus N, G °*devāya udamnāya audamāya ṛṇanjayāya tṛṇanjayāya* 7) Thus N, G *ghṛtanjayāya* 8) Thus N, G *traivṛṇāya* 9) Thus G, N ऽज्ञाय 10) Thus G, N धर्त्रे; see also HG II 19 6 11) Thus G; N °मार्वाङ्गिरोभ्ये 12) Thus N, G *itipurāṇebhyas* 13) G °*ukhāyātreye ātreyāya*, N तित्तिरयोखायात्रेयाय 14) Thus G, N पाद° 15) N ins. गृह्यकाराय 16) Thus N, G °*retasobhya* 17) Thus G, N एकपत्निभ्य

मीति । यथास्वं[1] पितृभ्यश्च कल्पयन्ति मातामहेभ्यश्च
पृथक्पृथगित्येतैरेव नामधेयैर्गन्धपुष्पधूपदीपान्नफलोदकै-
रमुष्मै[2] नमो ऽमुष्मै नम इति गन्धपुष्पधूपदीपैरमुष्मै[3]
स्वाहामुष्मै स्वाहेत्यन्नेनामुं तर्पयाम्यमुं[4] तर्पयामीति
फलोदकेनात्र नमस्यन्ति । त्रीनादितो ऽनुवाकानधीयन्ते[5]
काण्डादीन्वा सर्वान्काण्डात्काण्डात्प्ररोहन्तीति द्वाभ्या-
मुदकान्ते दूर्वा रोपयन्त्यथोदधिं कुर्वन्त्युन्नम्भय[6] पृथिवी-
मिति हस्तेन संसर्गास्त्रिरुद्धिध्या[7] तमितोराज्ञि[8] धावन्त्येवं
पारायणसमाप्तावनश्नन्पारायणमधीत्यैतत्कुर्वन्त्युदकान्ते[9]
दूर्वारोपणोदधिधावनवर्ज्ं[10] । प्रत्येत्य गृहान्ब्राह्मणान्भो-
जयेदपूपैर्धानाभिः सक्तुभिरोदनेनेत्येवमेवाद्भिरहरहर्देवानृ-
षीन्पितृंश्च[11] तर्पयेत्तर्पयेत् । ॥ ११ ॥

सर्वेषु पाकयज्ञेषु स्त्रियाश्चानुपेतस्य बलिमन्त्रो न
विद्यते । ऽपि वा स्त्री जुहुयान्मन्त्रवर्ज्ं[12] न[13] चानुपेत ।

---

1) Thus N, G *yathāsvayam* 2) G °*d'paithah phalodakairamuṣmai*, N Bh °दीपानफलैरमुष्मै 3) N om गधपुष्पधूपदीपैर् 4) G om 5) Thus MSS read °धीयते 6) Thus Bh, G *kuriannunnambhaya*, N कुर्वंयु° 7) Bh *samsargām*°, G *samsargā triruddhyā* N सगास्त उद्दिध्या 8) Thus N Bh, G °*ajan* 9) Thus Bh G *pārāyanasamāptau ianaśnan parāyanamadhīte tat*°, N पारायणा समाप्तौ वानश्नत्वा°, see Āp Dh Ś I 27 9 10) Thus N Bh, G corr 11) Thus Bh, G °*pitrīmśca*, N पितृश्च 12) Thus Bh, G *juhuyāmantraiarjanan*, N जुहुयात् न मन्त्रर्जने 13) N om

उपेतो व्याख्यातो ' गृहमेधिनो यदशनीयस्य[1] होमा बल-
यश्च स्वर्गपुष्टिसंयुक्तास्तेषां मन्त्राणामुपयोगे द्वादशाहमधः-
शय्या ब्रह्मचर्यं क्षारलवणवर्जनं चोत्तमस्यैकरात्रमुपवासः '
स्त्री वैश्वदेवं निर्वपेद्युक्तो वा स्वयं निर्वपेद्देवस्य त्वा
सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां विश्वेभ्यो 5
देवेभ्यो जुष्टं निर्वपामीति त्रिर्यजुषा तूष्णीं चतुर्थं ' पत्नी
प्रयता फलीकरोति ' पत्न्या उपदिशति ' प्रक्षालितपाणि-
पादावधिश्रयीत[2] शृतं[3] वेदयीत[4] ' भूतमिति भर्तुः प्रतिवे-
दयते ' तत्सुभूतं विराडन्नं तन्मा क्षायीति वचनमभिघा-
र्योद्वास्य प्रतिष्ठितमभिघार्योपरिष्टादद्भिर्मार्जयित्वाधस्ताद्धो- 10
मयेत ' नात्रेध्माबर्हिर्भवति नाघारौ नाज्यभागौ ' व्याहृती-
भिश्चतस्रः समिधो ऽभ्याधाय परिषिच्य हस्तेन जुहोत्यग्नये
स्वाहा सोमाय स्वाहा प्रजापतये स्वाहा धन्वन्तरये स्वाहा
ध्रुवाय स्वाहा ध्रुवाय भौमाय[5] स्वाहा ध्रुवक्षितये स्वा-
हाच्युतक्षितये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो 15
देवताभ्यः स्वाहाग्नये स्वाहाग्नये ऽन्नवते स्वाहाग्नये ऽन्ना-
दाय स्वाहाग्नये स्विष्टकृते स्वाहेति ' व्याहृतीभिर्हुत्वे-

---

1) Thus Bh, G °aśanīyaka, N °हनीयस्य 2) Thus emended, G °pāṇipādo adhi°, N °पाणिपादावधिश्रयति, Bh °pāṇipādāmadhi°
3) G Bh śritam, N श्रित 4) Thus G, N वेदयते, Bh vedayeta
5) Thus N, G bhūmāya

कैकशः समस्ताभिश्च 'मा नस्तोके[1] तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र
भामितो वधीर्हविष्मन्तो नमसा विधेम ते स्वाहा ॥
कामाय स्वाहा मन्यवे स्वाहेत्यथ परिषिञ्चति मन्त्रांश्च
5 संनमति[2]' ॥ १२ ॥

अपरेणाग्निं हस्तेन परिमृज्य धर्माय स्वाहाधर्माय
स्वाहा ध्रुवाय स्वाहा जयाय स्वाहेत्यन्नं[3] प्राणः[3] प्रजा-
पतिः[3] परमेष्ठिने[3] स्वाहेत्युखायामद्भ्यः स्वाहा वरुणाय
स्वाहेत्युदधान्यां 'रुद्राण्यै स्वाहा रुद्राय स्वाहेति रुद्रा-
10 ण्यां' भूः स्वाहेति सर्वदेवताभ्यो ऽन्तरिक्षाय स्वाहौष-
धिवनस्पतिभ्यः स्वाहेति मध्ये ऽगारे' कामाय स्वाहेति
शयनदेशे' वनस्पतिभ्यः स्वाहेति स्थूणादेश[4]' ओषधि-
वनस्पतिभ्यः[4] स्वाहेति[4] स्थूणाराजयोर्गृह्याभ्यः स्वाहा
गृहपतिभ्यः[5] स्वाहावसानेभ्यः स्वाहावसानपतिभ्यः
15 स्वाहेत्युत्तरपूर्वे देशे 'भूतेभ्यः स्वाहेत्युद्घाटे' यदेजति जगति
यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहेति संवदान्यामथ[6]
देहल्यां मरुद्भ्यः स्वाहेति 'मध्ये धात्रे स्वाहा विधात्रे

---

1) G abbreviates 2) Thus N, G Bh *samnamayati*
3) Thus G N, see MŚ II 3 4 31 18
4) G om 5) Thus N, G *gṛhyapatibhya*
6) Thus G Bh, N संधन्यामथ

स्वाहेति द्वयोर्वाद्ययोर्गृहादुपनिष्क्रम्याङ्के स्वाहा रात्र्यै
स्वाहेत्यथोपलब्धे[1] पिङ्गाक्ष्यै स्वाहा पिङ्गाक्ष्यै स्वाहेति
पिङ्गाक्ष्यां' विष्णवे स्वाहा विष्णवे स्वाहेत्युलूखलमुसले'
ऽनसि[2] स्वाहेति शकटे[3][4]' सोमाय[3] स्वाहेति[3] धा-
न्ये[5]' श्रियै स्वाहा पुष्ट्यै स्वाहेति धान्यनिचये' ऽथ प्रद-
क्षिणं बलिं निनयति प्राच्यै दिशे स्वाहा दक्षिणायै दिशे
स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्ध्वायै दिशे
स्वाहाग्नेय्यै दिशे स्वाहा नैर्ऋत्यै दिशे[3] स्वाहा वायव्यै
दिशे स्वाहैशान्यै[6] दिशे स्वाहा ब्रह्मणे स्वाहा प्रजा-
पतये स्वाहेति मध्ये' ॥ १३ ॥

इन्द्राय स्वाहेन्द्रपुरुषेभ्यः स्वाहेति पुरस्ताद्यमाय
स्वाहा यमपुरुषेभ्यः स्वाहेति दक्षिणतो' वरुणाय स्वाहा
वरुणपुरुषेभ्यः स्वाहेति पश्चात्सोमाय स्वाहा सोमपुरु-
षेभ्यः स्वाहेत्युत्तरतो[7]' ऽग्नये स्वाहेति[8] पुरस्ताद्यमाय[8]
स्वाहेति[9] दक्षिणतो[9]' वरुणाय स्वाहेति[10] पश्चात्सो-
माय[10] स्वाहेत्युत्तरतः' सप्तर्षिभ्यः स्वाहा सर्वभूतेभ्यः
स्वाहेत्युत्तरपूर्वे देशे' ऽथ[11] दक्षिणतः प्राचीनावीती

1) G °labdhau, S °लब्धाय, Bh athalabdhe 2) Thus Bh, G anase, N अनसे 3) G om 4) Thus Bh, N शकटे 5) Thus N Bh G dhānye 6) G aiśānyai, N स्वाहैशान्यै 7) G om uttarato 8) G om iti purastāt 9) G om iti dakṣiṇato 10) G om iti paścāt 11) Thus G Bh, N om

जुहोति पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः
प्रपितामहेभ्यः स्वधा नमो मातामहेभ्यः स्वधा नमो
मातुः पितामहेभ्यः स्वधा नमो मातुः प्रपितामहेभ्यः[1]
स्वधा नम इति[2] त्रीननुगेभ्यः[3] स्वधा[3] नम[3] इति[3]
मध्ये ' ऽप उपस्पृश्योत्तरतो यज्ञोपवीती जुहोत्यृग्वेदाय
स्वाहा यजुर्वेदाय स्वाहा सामवेदाय स्वाहाथर्ववेदाय
स्वाहाथर्वाङ्गिरोभ्यः स्वाहेतिहासपुराणेभ्यः स्वाहा सर्व-
देवजनेभ्यः स्वाहा सर्वभूतेभ्यः स्वाहेत्यथोर्ध्वं बलिं नि-
नयति ये भूताः प्रचरन्ति दिवा बलिमिच्छन्तो वितुदस्य
प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं
पुष्टिपतिर्दधातु स्वाहेति ' नक्तं बलिमिच्छन्त इति रात्र्या-
मथार्कणीकपर्णेन बलिं निनयति येषां न[4] माता[4]
पचते येषां रात्र्यां[5] समागमम्[6] । तेषामहं तु[7] भूतानां
पिण्डं दास्याम्ययाचितः[8] ॥ भये मे ऽभयमस्तु दुर्भिक्षे च
सुभिक्षणाम्[9] । जननमारके[10] मृत्युज्ञातिप्राये[11] चं का-

---

1) N ins स्वधा नमो मतुर्वृद्धप्रपितामहेभ्य  2) G om  3) N om; G *trnugegebhya°*, Bh *trīn'nugebhyah°*  4) Thus G, N माता न, Bh om *na*  5) Thus N, G *rātryau*, Bh *rātrau*  6) G *samāgamama*, N गृहागम, Bh *samāgama*  7) G om  8) Thus N, G *dāndāsyāmyayacato*  9) Thus N, G *subhikṣe ca tān*  10) Thus N, G *janakamāraka*  11) G *mrtyutvayādiprāye*, N मृत्य°

स्यतां[1] स्वाहेति 'पात्रसंक्षालनं निनयति निशि[2] श्वितेभ्यः[2] स्वाहा रुद्राय स्वाहेति वा[3] 'वैश्वदेवं कृत्वातिथिमाकाङ्क्षेतागोदोहनकालमग्रं[4][5] वोद्धृत्य निदध्यांद्वो वा एष पञ्चमो यदतिथिः' ॥ १४ ॥

अपरेण गार्हपत्यमुपविश्याधीहि भो इत्युक्त्वा सावित्रीं 5 सहस्रकृत्व[6] आवर्तयेच्छतकृत्वो वा' दशवारं[7] वेदादीञ्जपेच्छन्दांसि[8] कूष्माण्डानि चाधियीताग्निमीळे[9] पुरोहितमित्यृग्वेदस्येषे त्वोर्जे त्वेति यजुर्वेदस्याग्न[10] आयाहि[10] वीतय इति सामवेदस्य शन्नो देवीरभिष्टय[11] इत्यथर्ववेदस्याग्निर्मूर्धेति छन्दांसि यद्देवा देवहेडनमिति[12] कूष्मा- 10 ण्डो' यदधीते स ब्रह्मयज्ञो' यज्जुहोति स देवयज्ञो' यत्पितृभ्यः स्वधा करोति स पितृयज्ञो' यद्भूतेभ्यो बलिं हरति स भूतयज्ञो' यदतिथिभ्यो ऽन्नं ददाति स मनुष्ययज्ञ इत्येते[13] वै पञ्च महायज्ञाः[14] सतति[15] सुप्रयुक्ता नयन्ति परमां गतिम्' 15

1) Thus G, N वास्यतां; read perhaps वास्यता 2) Thus emended; G Bh *ših šilebhya*, N शिशि शिश्वितेभ्य 3) Thus N; G *yo* 4) Thus G Bh, N °मांकांक्षेद्र° 5) Thus N, G °*kālamātram*, Bh °*kālamātramagram* 6) Thus N, G om. *krtva* 7) Thus G, N दशावर्तं 8) Thus G, N वेदादींश्छदांसि 9) G om. from here unto यदधीते 1. 11 10) Thus Bh, N °स्याग्न आयाह 11) Thus emended, N देवीरभिष्टय 12) Thus emended, N देवहेलन 13) Thus N Bh, G *etu* 14) Thus N Bh; G *mahāyajñās* 15) Thus N Bh, G *satatra*

एतेभ्यो यस्य[1] पञ्चभ्यो[1] यज्ञ एको ऽपि हीयते ।
मनस्वत्याहुतिस्तस्य प्रायश्चित्तं विधीयते ॥
द्व्यहं त्र्यहं वापि प्रमादादकृतेषु तिस्रस्तान्तुमतीर्हुत्वा चतस्रो
वारुणीर्जपेद्दशाहं द्वादशाहं वा विच्छिन्नेषु[1] स्वस्त्ययनेषु[2]
तु सर्वशश्चतस्रो ऽभ्यावर्तिनीर्हुत्वा कार्यस्तान्तुमतश्चरुः'
यस्य स्त्री वानुपेतो वा गृहेष्वेतान्बलीन्हरेत् ।
कूष्माण्ड्यस्तत्र होतव्या हुत्वा[3] यज्ञसमृद्धये ॥
प्रवासं गच्छतो यस्य गृहे कर्ता[4] न विद्यते ।
पञ्चानां महतामेषां स यज्ञैः सह गच्छति ॥
प्रवासे कुरुते चैतान्यदन्नमुपपद्यते ।
न चेदुत्पद्यते त्वन्नमद्भिरेनान्समापयेत् ॥
अद्भिरेव व्रतं कृत्वा यथालाभमनुव्रतः[5] ।
देवानां देवयज्ञेन हित्वा गच्छति सात्मताम् ॥
पितॄणां पितृयज्ञेन भूतियज्ञेन भूतीनाम्[6] ।
मनोर्मनुष्ययज्ञेन ब्रह्मयज्ञेन ब्रह्मणः ॥
एतेषां सात्मतां गत्वा देवतानां शतं समाः ।
आनन्दं ब्रह्म गच्छन्ति ध्रुवं[7] शाश्वतमव्ययम्[8] ॥
इति ॥ १५ ॥

---

1) G om  2) N om  3) Thus MSS, read perhaps हुता  4) Thus N Bh, G *kartta*  5) Thus N Bh, G °*anuvratām*  6) G *bhūtinah*, N भूतिनां  7) Thus N, G *dhrutam*  8) Thus N Bh, G *śaśvatam*°

नान्दीश्राद्धस्य पूर्वपक्षे यथोपदेशं पूर्वेद्युर्वा युग्मान्ब्राह्मणान्भोजयेत्प्रदक्षिणमुपचारो ऽग्निमिद्ध्वा[1] दूर्वाभिः संस्तीर्य भोजनस्थानेषु च पवित्रे[2] कृत्वा[2] पात्रे[2] निधायोत्पूय[2] यवान्निधाय प्रणीतावदुपचारं हविष्यं च दध्योदनं चासाद्य नान्दीमुखाः पितरः प्रीयन्तामित्यपां प्रतिग्रहणं विसर्जनं च ' पश्चादेवं विश्वेभ्यो देवेभ्यो ' नान्दीमुखेभ्यः पितृभ्यः स्वाहेति हुत्वोपस्तीर्य सर्वं द्विर्द्विरवद्यत्यभिघार्य वैष्णव्यर्चोपस्पर्शयित्वाचान्तेषु पूर्णपात्रं दत्त्वा गोमयेनोपलिप्य दध्योदनशेषं यवोदकेनावोक्ष्य न्युप्य पश्चात्परिषेचनं ' संपन्नमिति पृष्ट्वा[3] देवकृरित्यनुवाकशेषं[4] जपेद्ब्राह्मणान्भोजयित्वाशिषो वाचयति ' ॥ १६ ॥

संवत्सरे सपिण्डीकरणमेकादशे मासि षष्ठे चतुर्थे द्वादशे ऽहनि ' यदि पुण्याहकाल उपव्यावर्तेत पितृणामावाहनं[5] ' सव्यस्य पाणेरङ्गुष्ठेनोपमध्यमया चाङ्गुल्यालभ्य पृथिवीं जपेद्ये पार्थिवासः पितरो ये अन्तरिक्षे ये दिवि ये वामृता बभूवुः । ते अस्मिन्यज्ञे अमृता मादयन्तामिति ' चत्वारि पात्राणि सतिलगन्धोदकेन पूरयित्वैकं प्रेतस्य

---

1) Thus Bh, G N *iddhvā* 2) Thus Bh, G *pātre kṛtvotpūya*, N पवित्र कृत्वोत्पूय 3) Thus N Bh, G *spṛṣṭvottha* 4) Thus N Bh G *devabhūr°* 5) Thus G, N °वाहन

त्रीणि पितॄणामेकं वा पितॄणां प्रेतपात्रं पितृपात्रेष्वासि-
ञ्चति ये समाना ये सजाता इति द्वाभ्यामसौ पितृभिः
पितामहेभिः प्रपितामहेभिः सहैतत्ते तिलोदकं तस्मै ते
स्वधा नम इति तिलोदकप्रदानमग्नौकरणमनुदेशनीयं च
5 यथार्थमूहेदासेचने' सपिण्डी[1] व्याख्याता' यथाश्रद्धं[2] दक्षि-
णा भवन्त्यत ऊर्ध्वं मासिश्राद्धेन' ॥ १७ ॥

अथ गृह्यप्रायश्चित्तानि' यानि स्मर्यन्ते तानि वक्ष्यामः'
शेषाणि वैतानिकानि स्रुक्होमदेवतायाः समाम्नानात्फ-
लश्रुतेश्च[3]' या एवाग्निहोत्रे देवतास्ता औपासने य
10 एवाहिताग्नेर्धर्मः स एव धर्मो य एवाहिताग्निर्लौकिः स
एवौपासनिकस्येति शाट्यायनिब्राह्मणं भवति' तत्र ये
पुरोडाशास्त इह चरवः' पयोदधिपृषदाज्यानामाज्यव-
त्संस्कारो' न दध्नो ऽधिश्रयणं' प्रत्यसने परिषेचनमद्भी[4]'
रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदनखननिरसनावघ्राणात्मा-
15 भिमर्शनानि च कृत्वाप उपस्पृशेत्सर्वत्र स्कन्ने भिन्ने क्षामे
दग्धे विपर्यासे ऽन्तरिते च द्वे मिन्दाहुती जुहोति यन्म[5]
आत्मनो[5] मिन्दाभूत्पुनरग्निश्चक्षुरदादिति[5] द्वाभ्यामथ[5]

---

1) Thus Bh, G *sapindah*, N पिण्ड  2) Thus N Bh, G *°śrāddhan*
3) G *sāmnātāt°*, N °पंचश्रुतेश्च ; Bh *samāmnāt°*  4) G *parivesanam°*,
N प्रतिवेषणम्°, Bh *pratiṣecanam°*  5) G om unto *atha* l 17

स्कन्ने सं त्वा सिञ्चामीति स्कन्नमभिमन्त्र्योन्नम्भय पृथिवी-
मित्यपो[1] ऽभ्यवहृत्य[2] भूरित्युपस्थायास्कान्द्यौः पृथिवी-
मित्याहुतिं[3] जुहोत्यथवान्यं[4] चेद्देवाञ्जनमगन्यज्ञ[4] इति
चानुमन्त्रणं किं चिच्च[5] दग्धादिन्ने[5] भूमिर्भूमिमगादिति
भिन्नमभिमन्त्र्योन्नम्भय पृथिवीमित्यपो ऽभ्यवहृत्य[6] त्रय-
स्त्रिंशत्तन्तव इत्येतया जुहुयादग्नौप्रक्षेपणं दारुमये ' ऽप
क्षामे निर्ऋत्यै त्वेति विदग्धमभिमन्त्र्य त्वं पराची त्वमवाची
त्वं रक्षांसि[7] गच्छेति दक्षिणापरमुत्तरापरं वा दिशं तं
प्रति निरस्यत्यग्नी रक्षांसि सेधतीति तिस्र आज्याहुती-
र्जुहुयात् ' ॥ १८ ॥

अहुत्विज्य[8] आगमनमन्यस्यैकदेशश्चेद्धृत्येतत्कृत्वैतया[9]
जुहुयादेतेनाशृतदुःशृते[10] व्याख्याते ' अपो ऽभ्यवहरेयुत्र[11]
घ[11] चेन्धनमभावादध्यात्स्वाहाकारेणादधातीति[11] [12]
विज्ञायते ' रुद्राय त्वेत्यशृतमभिमन्त्र्य यमाय त्वेति दुःशृ-
तमेव परिस्तरणदाहे ऽग्नये क्षामवते नमो नमः क्षामवा-

---

1) Thus N Bh, G *°upo* 2) Thus G, N ऽग्निच्य, Bh *bhyavaneya*
3) G om. from here unto *juhuyād* l. 6. 4) Thus Bh, N °त्यव द्राज्ञां च तेज्ञां ग्रामां च्व 5) Thus Bh, N चार दृत्यादृट भिन्न
6) N ऽवजाहृत्य, Bh *hyīpasrtya* 7) Thus Bh G *ukṣāmsi*, N om
8) Thus N, G *harrya*, Bh *harit* 9) Thus G N घा- - -र्नं स्यांस्°, Bh *agamanasya anyasya* 10) Thus N Bh, G *'śrutamśrute*
11) Thus Bh, G *°cryanam°*, N °धरेदेतान्नृत्वेधा° 12) Thus N Bh G *°kārena juhoteti*

न्मा मा[1] हिंसीन्मा मे गृहं मा मे धनं मा मे प्रजां मा मे पशूनित्यभिमल्याग्नये व्रतमवते नमो नम इत्याहुतिं जुहुयादिन्द्रं वो विश्वतः परीति पुनः परिस्तीर्येन्द्राय स्वाहेत्याहुतिं जुहुयादथ परिधिदाहे प्रदाव्यायाग्नये[2] नमो[2] 5 नमः[2] प्रदाव्यायेति[2]' समानमत ऊर्ध्वमग्नेः[3] समिदसीति[4] पश्चार्ध यमस्य समिदसीति दक्षिणार्ध सोमस्य समिदसीत्युत्तरार्धमिन्धानास्त्वा शतं हिमा इत्याहुतिं जुहुयाद्दुष्टेऽन्यं परिदध्याद्गन्धर्वोऽसीति प्रतिमन्त्रमथ विपर्यासे त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयासि प्रजापत इति 10 चतस्र आहुतीर्जुहुयादेता[5] एवान्तरिते[5] मनो ज्योतिर्जुषतामिति पञ्चमीमन्तरितं च कुर्यात्संस्थिते[6] चेज्जानीयात्किं चिच्च दद्यात्' ॥ १९ ॥

उत्तरस्मिन्काल आगते होमश्चेति[7] निवृत्तः[7] पूर्वस्य सेयं कालातिपत्तिस्तस्यां प्रायश्चित्तं मनो ज्योतिरिति पूर्वस्य 15 हुत्वापरस्य जुहुयादेवं प्रतिहोममा दशरात्रात्प्राणायामश्चैकादशीप्रभृत्या विंशतिरात्रादुपवासश्चा त्रिंशद्रात्रादत

---

1) G om, N मा माभिरुक्त 2) Thus N Bh, G *pradāvyāyeta*

3) Thus N Bh, G °*agnaye* 4) Thus N Bh, G *samisadasīti*

5) Thus Bh, G °*etā etāntarite*, N °यादेतासा नारूप्रे

6) Thus N Bh, G *kāryyāt*° 7) Thus G Bh, N होमश्चेदिति°; these words seem to be corrupt, read perhaps होमश्चेन्निवृत्त

ऊर्ध्वमा षष्ठिरात्रात्तिस्रो रात्रीरुपवसेदंत ऊर्ध्वं प्राजापत्यं विद्वितमेंकादशीप्रभृति तिस्रश्च[1] तत्तुमतीस्तत्तुं तन्वन्नु- द्बुध्यस्वाग्ने त्रयस्त्रिंशत्तत्तव इत्युक्तमनुगत[2] इत्यपि[2] वा- याश्चाग्ने[2] ऽसीति जुहुयाद्वा त्रिरात्रान्मनो ज्योतिरित्या सप्तरात्रादंत[3] ऊर्ध्वमा द्वादशरात्रात्तिस्रो[4] रात्रीरुपवसेदंत 5 ऊर्ध्वं प्राजापत्यं विद्वितमेंकादशीप्रभृति तिस्रश्च तत्तुमती- रुक्तं द्वादशाहं विच्छिन्न इत्येकादशीप्रभृत्युपवासः पूर्व- वत्' ॥ २० ॥

अथ पर्वण्यतीते मनो ज्योतिरयाश्चाग्ने[5] यदस्मिन्नग्ने स्वस्ति न इन्द्र इति चतस्र आज्याहुतीर्हुत्वा स्थालीपाकं 10 च कुर्यात्प्रागष्टम्या' अत ऊर्ध्वं सोपवासः कार्यो[6] द्वयो- र्द्वो[6] त्रिषु[7] त्रय इत्येवं नैमित्तिकेष्वतीतेषु प्रायश्चित्तं' पार्वणावद्धोमः' पितृयज्ञे ऽतीते पक्षात्यये सोपवासः कार्य इति सिद्धं' नित्येषु चैवमेव स्यादथ महायज्ञानां' मनो ज्योतिरिति द्वयोस्त्रयाणां चतुर्णां[8] पञ्चानां वा' षष्ठप्रभृति 15 तिस्रस्तत्तुमतीर्हुत्वा चतस्रो वारुणीरिमं मे वरुण तत्त्वा यामि यच्चिद्धि[9] ते[9] यत्किं चेत्या नवरात्रादंत

---

1) G om. from here until tantumatîr l. 8. 2) Thus Bh., N इत्युक्त- मनुगतोपयाताश्चाग्ने 3) Thus Bh, N सप्तरात्रादत 4) Thus Bh, N द्वादशरात्रा° 5) G Bh ins. sth 6) Thus N, G karyyorddhayor° 7) Thus N, G trpu 8) G om 9) Thus N G yachiud

ऊर्ध्वमा दशरात्राच्चतस्रो ऽभ्यावर्तिनीर्हुत्वा कार्यस्तान्तुम-
तश्चरुः' स्नातकस्यापि होमविच्छित्तावुक्तं' प्राप्ते प्राजापत्ये
तस्य, विच्छित्तिस्तस्य तु पुनराधेयं' मनो ज्योतिस्तन्तुमतीः
पुनस्त्वादित्या रुद्रा इति च पूर्णाहुतिं प्रतीयादेतामप्सु-
5 पघातेषु सर्वत्र' स्त्रियाश्चैवं होमाभिगमनस्थालीपाकेषु'
सर्वेषामन्ततो व्याहृतीरिति सिद्धं' नम आचार्येभ्यो नम
आचार्येभ्यः' ॥ २१ ॥

॥ इति[1] भारद्वाजसूत्रे[1] तृतीयः[1] प्रश्नः[1] समाप्तः[1] ॥

॥ भारद्वाजीयं[2] गृह्यसूत्रं[2] समाप्तम्[2] ॥

---

1) Thus Bh, G ins *madācāryaviracite* behind *iti*, N om

2) G *om*, N श्रीभारद्वा°

# LIST OF MANTRAS [1].



---

1) This list comprises 1. the mantras not found in Bloomfield's Vedic Concordance, 2. the mantras differing more or less from the tradition hitherto known (when the beginning words are different from the usual tradition, the usual beginning is given in a foot-note).

The first kind of mantras are marked by an asterisk. After the manner of the concordance each quarter-verse is given separately, in alphabetic order.

2) agnīṣomā

1) agnes tvā 2) arjīt 3) anubavam 4) anuhūtaṃ
5) ājyasya *or* medasaḥ kulyā 6) apı 7) abhıbhūḥsaurya°
8) māsārdha° 9) aśvāvatı

1) ab bhrad agna 2) āgantrā 3) āgneyapāndu° 4) āyanty

1) evam te garbha

| | p | l |
|---|---|---|
| evam aham brāhmaṇānām vedeṣu nidhigopo bhūvāsam | 10 | 10 |
| *eha gacchantu pitaro haviṣe attavai | 43 | 7 |
| *eha vatsah krandatv ā kumārah | 28 | 8 |
| aulaba it tam upāhvaya | 38 | 8 |
| *kam upanayāmi | 7 | 11 |
| karad dadhac chivena tvā pañcaśākhena hastenāvidvi ṣāvatā sāhasreṇa yaśasvinabhimṛśāmi suprajāstvāya | 20 | 17 |
| kim jñānena kariṣyati | 11 | 14 |
| *kuberaya tvā mahārājāya paridadāmi | 8 | 1 |
| *kuberaya svahā | 36 | 9 |
| kurkuro bālabandhanah | 38 | 7 |
| kulaś ca vikulaś ca | 39 | 6 |
| kṛśāś cid amariṣṇavah | 7 | 13 |
| *kṣayāya svāhā | 80 | 7 |
| 1) kṣamavān ma mā hiṃsit | 87 | 15 |
| kṣemaya vah śivah śāntyai prapadye | 28 | 13 |
| 2) khajabojopakāśini | 23 | 11 |
| 3) gandharvas tato parah | 16 | 3 |
| gandharvo gnaye dadat | 16 | 5 |
| *gṛhapatibhyaḥ svāhā | 80 | 14 |
| gomad dhanavad aśvavad ūrjasvat suvīravat | 35 | 4 |
| grāmaṃ sajānayo gacchanti | 24 | 2 |
| *cakṣuś ca pratipadyate | 11 | 14 |
| *jananamārake mṛtyujātiprāye ca kalyatām | 82 | 15 |
| *jarām aśiya | 52 | 16 |
| | 54 | 2 |
| *jahi dviṣantaṃ hanīthā mama dviṣam | 57 | 16 |
| *jihīrṣāma | 56 | 4 |
| *jīva varṣasahasraṃ tvam | 65 | 2 |
| *juhomi vaiśvakarmaṇim* | 5 | 2 |

---

1) mā mā 2) khajapo *or* bajābo° 3) gandharvas te *or* gandharvo v v da

1) jaitryāyā° 2) tam 3) śāndikera *or* śanderathaś 4) mahyam tvādur 5) tam svadhām *or* tām tvam svadhām

---

1) abhiṣ tvāham 2) da vyo *or* daivī 3) devo devebh *or* devī devebh r

1) vig hya 2) nivarto yo 3) putrāmś caiva 4) pūruṣu
5) agnau prthivyām 6) prajapates 7) p at nandantu
8) n śithacārinī *or* naktamcār nī

---

1) prajāpatınā 2) mama cıttam 3) *This mantra has been ment oned because ın the Ved c Concordance ıt ıs regıstered under* mayı puṣṭ m puṣṭapatır dadhātu *all the texts except AV read ng (as Bhār does)* puṣṭıpatır 4) dırghayutvāya

1) mā ma 2) māsīmām

1) yad yukto 2) yad vāntarikṣāt 3) apsarāsu ca 4) yā te agne psu

| | p | l |
|---|---|---|
| ye deva uttarasadaḥ | 37 | 5 |
| ye devā dakṣiṇasadaḥ | 37 | 5 |
| ye devāḥ paścātsadah | 37 | 5 |
| ye pakṣiṇah prathayantı | 64 | 5 |
| *ye pārthıvā·ah pıtaraḥ | 85 | 15 |
| ye bhūtāḥ pracarantı dıvā | 82 | 9 |
| ye bhūtāḥ pracarantı naktam | 82 | 11 |
| *ye vāmṛtā babhūvuḥ | 85 | 16 |
| *yeṣāṃ rātryāṃ samāgamam | 82 | 13 |
| *yeṣaṃ na mātā pacate | 82 | 12 |
| [1]) yeṣāṃ pravasann adhyeti | 28 | 5 |
| rāṣṭrabhṛd asy adhıpatyasandī mā tvad yoṣam | 56 | 10 |
| *rudrāṇyaı svāha | 80 | 9 |
| *loke vedāyāsmi dvıṣato vadhāya | 55 | 10 |
| vaptrā vapası varcasā mukham | 51 | 14 |
| varuṇapuruṣebhyaḥ svāhā | 81 | 13 |
| *varco me prāvocaḥ | 58 | 12 |
| vahānnaṃ jātavedah pıtṛbhyah | 49 | 14 |
| [2]) vahāpūpaṃ jatavedaḥ pıtṛbhyaḥ | 48 | 3 |
| *vāyave tvā parıdadāmı | 8 | 3 |
| *vāyavyaı dıśe svāhā | 81 | 8 |
| vayo vratapata ādıtya vratapate vratānām vratapate śukrıyam vratam carıṣyāmı | 73 | 10 |
| vayo vratapata ādıtya vratapate vratānam vratapate hotrbhyo vratam carıṣyāmı | 71 | 14 |
| vāyo vratapata adıtya vratapate vratānāṃ vratapate hotṛbhyo vratam acārıṣam | 72 | 10 |
| *vāruṇıbhyo devatābhya upaniṣadbhyaḥ svāhā | 71 | 9 |
| *vıdhatre svāhā | *80* | *17* |
| [3]) vıśve devāh samāhıtāh | 60 | 9 |
| *vıhāya dauṣkṛtyam sadhukṛtyam | 68 | 4 |

1) yesām adhyetı 2) vahājyam *or* vaha vapām 3) sarve lokās

1) śriyā mā 2) śvetavāya° 3) sam vaḥ 4) sa me mukham
5) sa mām ā°

1) indrīpāsya 2) sv sto yam

# INDEX OF WORDS[1].



1) This index contains all the words of the Bhar G, except those of the mantras, the lists of passages are complete, except that of *iti* The numbers refer to the pages and the lines

Words treated of in the introduction are marked with an asterisk

---

1) Not registered in the dictionaries thus far

---

1) Not registered in the dictionaries Uncertain reading

---

1) In this sense not registered in the dictionaries
2) Not registered in the dictionaries

---

1) *In this sense not registered in the dictionaries*

1) Not registered in the dictionaries

1) In the same sense and the same context this word is used Āp G 20 15 Bohtlingk and Roth translate "ganz jung" I should prefer to translate "quickly digesting"

2) Not registered in the dictionaries

1) Uncertain reading

---

1) Not registered in the dictionaries.

1) *In this sense not registered in the dictionaries*

1) Not registered in the dictionaries

1) Not registered in the dictionaries

# ADDITIONS AND CORRECTIONS.

p 15 l 4 add a note on शन्तमा Thus G, N सुमना'

p 18 l 13 „ „ „ „ ऽभि Thus G, N ति

p 19 note 6 read HG I 23 7

p 20 l 9 add a note on नाशयामसि Thus G, N नाशय

p 29 l 17 read probably त्वमग्ने अयास्ययाश्याग्ने ऽस्यनभि-
शस्तीश्च etc

p 31 note 7 read G Bh

p 33 note 15 „ Ā G

p 35 note 10 , G Bh

p 51 l 8 „ उपविशति' तस्य

p 54 l 6 , ऽत्सत्रासाहं

p 56 l 16 „ सेनानीर्वा

p 73 note 3 „ kaṇḍika

p 76 l 7 , अहोरात्राणि

p 80 l 17 „ स्वाहेति मध्ये'

p 85 l 8 पूर्णपात्र

# ABBREVIATIONS.

| | | |
|---|---|---|
| AV | Atharva Veda | |
| ĀG | Āśvalāyana Gṛhyasūtra | |
| Āp. G | Āpastamba | „ |
| Āp. Dh | „ | Dharmaśāstra |
| Āp. MB | „ | Mantrabrāhmaṇa |
| Āp. Ś | „ | Śrautasūtra |
| RV | Ṛgveda | |
| RVKh | „ | Khila |
| Kauś. | Kauśitaki Brāhmaṇa | |
| TĀ | Taittirīya Āraṇyaka | |
| TB | „ | Brāhmaṇa |
| TS | „ | Saṃhitā |
| PG | Pāraskara Gṛhyasūtra | |
| Baudh. G | Baudhāyana | „ |
| Baudh. Dh | „ | Dharmaśāstra |
| Baudh. Ś (BŚ) | „ | Śrautasūtra |
| MG | Mānava Gṛhyasūtra | |
| MŚ | „ | Śrautasūtra |
| MS | Maitrāyaṇī Saṃhitā | |
| Śat. B | Śatapathabrāhmaṇa | |
| SMB | Sāmaveda Mantrabrāhmaṇa | |
| SV | Sāmaveda | |
| HG | Hiraṇyakeśin Gṛhyasūtra | |
| H Dh | „ | Dharmaśāstra |
| HŚ | „ | Śrautasūtra |

SBE *Sacred Books of the East*

ZDMG Zeitschrift der Deutschen Morgenländischen Gesellschaft.

# STELLINGEN.

---

## I.

In Āpastamba śrautasūtra XV 20 zijn, tegen den commentaar in, sūtra 11 en 12 bij elkaar te nemen *athāsya brahmacāryam adhi nitye.*

## II.

In Śāṅkhāyana gṛhyasūtra III 2 6—9 moet in plaats van *enam* en *enām* gelezen worden *ainam* en *ainam*

## III.

In het mantra

*saptárṣayaḥ prathamā́ṃ kṛttikānām arundhatīṃ yád dhruvátāṃ*
*ha ninyuḥ |*
*ṣáṭ kṛttikā mukhyayogā́ṃ vahantīyám asmā́kam edhatv aṣṭamī ||*

moet niet, zooals Winternitz (Das altindische Hochzeitsrituell p 77) op gezag van den commentator doet, bij *aṣṭamī* aangevuld worden *kṛttikā*

## IV.

Mahābhārata I 8 15 (ed Bombay)

*pitaram sakhibhih so 'tha śravayām asa* *bhargavam* |
*pramatiś cabhyayacat tām sthulakeśam yaśasvinam* ||

lees *bhargavah*

## V.

Fragm Tahm XXXIII § 66 (Annales du Musee Guimet XXIV p 66)

*noit te ahmat* *drajoyeitim* *framraomi spitama zaraϑuštra yam dahmām vaṅhim afritim*

lees niet met Bartholomae (Altir Worterb kolom 774) *drajyo iyeitim*, maar *drajoyehim*

## VI.

De groote uitbreiding der Indo-arische kultuur is mogelijk gemaakt door de vruchtbaarheid der Ganges-vlakte

## VII.

Terecht oordeelt Jostes Zfda XLIX p 306, dat in het capitulare van Karel den Groote van 23 Maart 789 *winileodos* niet vertaald moet worden met ‚Liebeslieder', noch met ‚gemeinsame Arbeitslieder', maar dat *leodi* „vasalli", „subditi" is

## VIII.

De door Schonbach (Sitzb K. K Ak W W, Ph Hist Cl CXLI, 2, p 58) gegeven verklaring van Heinrich von Veldeke s verzen (M F p 58 vs 11 vlgg) is onjuist

IX.

De gebruikelijke verklaringen van „verbazen" in de re[
Lucifer 845 e v.

Wat is by ons alree mishandelt, of misdaen,
Dat Godt een waterbel, vol wint en lucht geblazen,
Verheft om d'Engelen, zyn zonen, te verbazen?

zijn niet bevredigend

X.

Een vergelijking tusschen Hooft's en Vondel's proza d
duidelijk de verschillende wijzen zien, waarop beiden tegeno
de „renaissance" staan

XI.

Ook na Kloos' inleiding tot Feith's gedichten bestaat er v
de officieele geschiedschrijving onzer letteren geen aanleidi
haar oordeel over dezen dichter te herzien

XII.

In de wetenschap der kunstgeschiedenis heeft het kunstw
zelf, als document, meer waarde dan de litteraire bericht
omtrent dat kunstwerk, en vormt een veiliger basis voor l
bouwen van een hypothese dan litteraire documenten

XIII.

De door Dr F Adama van Scheltema (Über die Entwicklu
der Abendmahlsdarstellung, Leipzig 1912, p 40, noot 1) a

geroerde vraag, welke betrekking er bestaat tusschen de avond maalsfresco's in de refters van het Ognissanti- en het San Marco klooster te Venetie, ten onrechte *beide* aan Ghirlandajo toegeschreven, is vatbaar voor stelliger en duidelijker beantwoording, dan door hem gegeven wordt

## XIV.

Jeanne d'Arc heeft in den tijd, dat zij zich haar missie bewust werd, den invloed van geen enkele „profetie" ondergaan De voorstelling door A France Vie de Jeanne d'Arc I p 200 vlgg gegeven, is geheel onjuist

## XV.

Zeer terecht beweert Robert Fruin (Staatsinstellingen p 169), dat bij de afzwering Middeleeuwsche opvattingen meer dan de moderne de Nederlanders beheerschten De geheele acte van afzwering zelfs is doortrokken van Middeleeuwsche staatsrechtelijk filosofische gedachten